वष्टि भागुरि रल्लोपमवाप्योरुपसर्गयोः ।
आप चैव हलन्तानां यथा वाचा निशा दिशा ॥

वगाह्य, पिधानम्



अचोन्त्यादि टि.

येन विधिस्तदन्तस्य.

यस्मिन्विधिस्तदावल्ग्रहणे.

(सप्तम्यन्ते अल्ग्रहणे विशेषणीभूते यो
विधिरारभ्यते स तदादौ ज्ञेयः )

अलोन्त्यस्य. (षष्ठीनिर्दिष्टः आदेशः)

ङिच्च, अन्त्यस्य (स्थानिन आदेशः )

आदेः परस्य. (परस्य यदुक्तं तत् स्थानिनः आदेः)

अनेकाल् शित् सर्वस्य.

तस्मादित्युत्तरस्य.

उभयनिर्देशे पञ्चमीनिर्देशो बलीयान्.

(सप्तमी पञ्चमी)

आद्यन्तौ टकितौ.

मिदचोऽन्त्यात्परः.

अपृक्त एकाल्प्रत्ययः.

अलोऽन्त्यात्पूर्व उपधा.

पूर्वत्रासिद्धम्.

ह्रस्वं लघु.

संयोगे गुरु. ह्रस्वम्.

दीर्घं च. गुरु.

स्थानिवदादेशो नाल्विधौ.

यस्मात्प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गम्. 31



विभक्ति

अर्थे प्रथमा. गौरश्व. पुरुषो हस्ती.

अनभिहिते.

सप्तम्यधिकरणे च. भूतले घटः, दूरे, अन्तिके वा.

ध्रुवमपायेऽपादानम्. (विभागे स्थिरम्)

39 अपादाने पञ्चमी. वृक्षात् पतति.

कर्मणा यमभिप्रैति स सम्प्रदानम्.

चतुर्थी सम्प्रदाने. दरिद्राय ददाति.

स्वतन्त्रः कर्ता.

साधकतमं करणम्.

कर्तृकरणयोः (अनुक्तयोः) तृतीया.

व्याघ्रेण हन्यते गौः, कुठारेण छिनत्ति वृक्षम्.

कर्तुरीप्सिततमं कर्म.

कर्मणि (अनुक्ते) द्वितीया. ओदनं भुङ्क्ते.
ग्रामं व्रजति.
नदीं याति.

षष्ठी शेषे. राज्ञः पुरुषः, धनं वा.

लः कर्मणि च भावे चाकर्मकेभ्यः. कर्तरि.

अकर्मकेभ्यो धातुभ्यो — भावे कर्तरि च लः.
सकर्मकेभ्यो ,, — कर्मणि ,, ,,

वर्तमाने लट्. धातोः परे (भू+लट्)

50 लस्य— तिप् तस् झि
सिप् थस् थ
मिप् वस् मस्

| | | |
|---|---|---|
| त | आताम् | झ |
| थास् | आथाम् | ध्वम् |
| इट् | वहि | महिङ् |

तिङ् शित् सार्वधातुकम्.

तङानावात्मनेपदम्.

भावकर्मणोः. धातोरात्मनेपदम्.

सार्वधातुके यक्. धातोः भावकर्मणोः.

टित आत्मनेपदानां टेरे. भूयते चैत्रेण.

लः

— कर्मणि —

अनुभूयते चैत्रेण सुखम्.

लः

— कर्तरि —

कर्तरि शप्. धातोः सार्वधातुके.

सार्वधातुकार्धधातुकयोः. इको गुणः.

भवति, भवसि.

58 अतो दीर्घो यञि. सार्वधातुके.

भवामि, भवतः - भवथः, भवावः.

झोन्तः. प्रत्ययस्य

अतो गुणे. अपदान्तात् पर एकः पूर्वपरयोः.

भवन्ति, भवथ, भवामः

तिङस्त्रीणि त्रीणि प्रथममध्यमोत्तमाः

तान्येकवचनद्विवचनबहुवचनान्येकशः

युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि

मध्यमः

अस्मद्युत्तमः. उपपदे समानाधिकरणे स्थानिन्यपि.

65 शेषे प्रथमः

| | | |
|---|---|---|
| स भवति | तौ भवतः | ते भवन्ति. |
| त्वं —सि | युवां —थः | यूयं —थ. |
| अहं —वामि | आवां —वावः | वयं भवामः |

---

भावो भावना उत्पादना क्रिया सा च धातुत्वेन सकलधातुवाच्या । भावार्थकलकारेणानूद्यते । युष्मदस्मद्भ्यां सामानाधिकरण्याभावात् प्रथमपुरुषः । तिङ्वाच्यभावनाया असत्त्वरूपत्वेन द्वित्वाद्यप्रतीतेर्न द्विवचनादि, किन्त्वेकवचनमेव भावे प्रयोगे.

थासः से. टि तोलस्य

अनुभूयसे, अनुभूये

सार्वधातुकमपित्. ङित्.

आतो ङितः. अतः परस्य इय्.

लोपोव्योर्वलि. अनुभूयेते, थे, यावहे.

अनुभूयन्ते, ध्वे, यामहे.

| | | |
|---|---|---|
| गौः | हन्यते | व्याघ्रेण. |
| त्वम् | हन्यसे | ,, |
| अहम् | हन्ये | ,, |



— नाम —

रायो हलि. आ. राः, रायम्, राभ्याम्.

हल्ङ्याभ्यो दीर्घात् सुति स्यपृक्तं हल्. लुप्यते.

मरुत्, मरुतम्.

झलां जश् झशि. मरुद्भ्याम्, मरुत्सु.

73 चोः कुः पदान्ते झलि च.

वाक्, वाचम्, वाग्भ्याम्, वाक्षु.

भिषक्, भिषजम्, भिषग्भ्याम्.

खरि च, झलां चरः. भिषक्षु.

तातः

अमि पूर्वः, अकोऽचि एकः पूर्वपरयोः. तातम्

टा ङसि ङसां इनात्स्याः, अतः परेषाम्. तातेन.

ङेर्यः, अतः परस्य.

सुपि च, अतो दीर्घो यञि.
तताय, तातात्, तातस्य, ताते, तातौ,
ताताभ्याम्.

ओसि च, अत एत्. तातयोः.

प्रथमयोः पूर्वसवर्णः, दीर्घ एकः पूर्वपरयोः अकोऽचि.
ताताः.

तस्माच्छसो नः पुंसि, (पूर्वसवर्णदीर्घात्.)
तातान्.

नादिचि, पूर्वसवर्णदीर्घः.

अतो भिस ऐस्. तातैः.

84 बहुवचने झल्येत्, अतः सुपि. तातेभ्यः.

ह्रस्व नद्यापो नुट्. आमः.

नामि, अचो दीर्घः. तातानाम्, तातेषु.



यू स्त्र्याख्यौ नदी. पेटी, पेटीम्, पेट्या.

आण् नद्याः, ङितः. पेट्यै, पेट्याः.

ङेराम् नद्याम्नीभ्यः. पेट्याम्.

दीर्घाज् जसि च, इचि न पूर्वसवर्णदीर्घः.

पेट्यौ, पेटीभ्याम्, पेट्योः, पेट्यः, पेटीः,
पेटीभिः, पेटीनां, पेटीषु.

माला, मालाम्.

आङि चापः, ओसि च पत्. मालया

याडापः, ङितः. मालायै, मालायाः.

औङ आपः, शी. माले, मालाभ्यां, मालयोः,
मालाः, मालाभिः, मालानां, मालासु.

— सम्बुद्धिः —

94 एकवचनं सम्बुद्धिः. सम्बोधने प्रथमायाः.

सम्बुद्धौ च, आप एत्.

एङ् ह्रस्वात् सम्बुद्धेः, हलो लुक्.

हे माले, बाले, तात.

अम्बार्थनाद्योर्ह्रस्वः, सम्बुद्धौ.

हे अम्ब, अक्क, पेटि, द्रौपदि, गौरि.

ह्रस्वस्य गुणः, (इकः) सम्बुद्धौ.

हे पते, सखे, कपे, मते.

99 सर्वादीनि सर्वनामानि.

सर्व. विश्व. उभ. उभय. डतर. डतम.
अन्य, अन्यतर. इतर. त्वत्. त्व. नेम.
सम. सिम.

पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थाया-
मसञ्ज्ञायाम्.

स्वमज्ञाति धनाख्यायाम्.

अन्तरं बहिर्योगोपसंव्यानयोः.

त्यद्, तद्, यद्. एतद्. इदम्. अदस्. एक.
द्वि. युष्मद्. अस्मद्. भवतु. किम्.

सर्वनाम्नः स्मै. ङे प्रत्ययस्यातःपरस्य. सर्वस्मै.

ङसि ङ्योः स्मात् स्मिनौ. अतः सर्वनाम्नः.

सर्वस्मात्, सर्वस्मिन्.

जसः शी, अतः सर्वनाम्नः. सर्वे.

आमि सर्वनाम्नः सुट्. सर्वेषाम्.

किमः कः, विभक्तौ. कस्मै.

त्यदादीनां अः. विभक्तौ. यस्मै.

तदोः सः सावनन्त्ययोः, त्यदादीनाम्.

सः, एषः, तस्मै, एतस्मै.

एतत्तदोः सुलोपोऽकोरनञ्समासे हलि.

स गजः, स शनैः, सोऽपि.

अजाद्यतष्टाप्. स्त्रियाम्. सा, या, एषा, का.

(अजा, अश्वा, अजः, अश्वः.)

सर्वनाम्नः स्याड् ह्रस्वश्च, आपः. परस्य ङितः.

तस्यै, यस्यै, कस्यै, कस्याम्.

110 अत्वसन्तस्य चाधातोः. दीर्घ उपधायाः

सावसम्बुद्धौ. (मयात्)

(भवतु, गोमतु, यावतु.)

उगिदचां सर्वनामस्थानेऽधातोः, नुम्.

सुडनपुंसकस्य, सर्वनामस्थानम्.

संयोगान्तस्य लोपः, पदस्य.

भवान्. भवन्! भवता. भवद्भ्याम्.

(चन्द्रमस्. अप्सरस्. उषस्. वेधस्. पुरोधस्.)

चन्द्रमाः. चन्द्रमः! चन्द्रमसा.

चन्द्रमोभ्याम्.

गोतो णित्. सर्वनामस्थानम्.

(गो)

अचो ञ्णिति, वृद्धिः. गौः, गावौ; गावः.

औतोम्शसोः, अचि एकः पूर्वपरयोः.

गाम् (गावौ) गाः. गवा, गोभ्याम्.

ङसिङसोश्च, एङः अति पूर्व एकः पूर्वपरयोः.

गोः. गवि, गवोः, गोषु.

---

(षष्)

ष्णान्ता षट्. सङ्ख्या.

119 षड्भ्यो लुक्. जश्शसोः.

झलां जशोऽन्ते, पदस्य. षट्, षड्भिः.
षट्चतुर्भ्यश्च. आमो नुट्.
ष्टुना ष्टुः, स्तोः. (षड्-णाम्) षण्णाम्,
षट्सु.

. (पञ्चन्, सप्तन्, अष्टन्, नवन्, दशन्.)

नलोपः प्रातिपदिकान्तस्य, पदस्य. पञ्च.
पञ्चभिः, पञ्चभ्यः.

नलोपः सुप्स्वरसञ्ज्ञा तुग्विधिषु कृति, असिद्धः.
नोपधायाः, नामि दीर्घः. पञ्चानां, पञ्चसु.
चतुरनडुहोरामुदात्तः, सर्वनामस्थाने.
(चत्वारि) चत्वारः, चतुरः, चतुर्भिः.
रषाभ्यां नो णः समानपदे. चतुर्णाम्, चतुर्षु.
(पूर्णा)
त्रिचतुरोः स्त्रियां तिसृचतसृ, सुपि.
अचि र ऋतः. तिसृचतस्रोः.
तिस्रः, चतस्रः, तिसृभिः, चतसृभिः.
130 उनोंण्, (ऋवर्णान्तस्य णः) तिसृणाम्,
चतसृणाम्.

न तिसृचतसृ, नामि दीर्घः.

जसि च, ह्रस्वस्य गुणः.

त्रयः, त्रीन्, त्रिभिः, त्रिभ्यः.

त्रेस्त्रयः, आमि.

अट्कुप्वाङ्नुम्व्यवायेऽपि, रषाभ्यां नो णः

समानपदे. त्रयाणाम्, त्रिषु.

रामेण, सर्वेण. (पूर्णौ)

पदान्तरस्य, नो णो न. सर्वान्, त्रीन्.

न षट्स्वस्रादिभ्यः, ङीप्टापौ स्त्रियाम्.

षट्, पञ्च, स्वसा.

स्वसा तिस्रश्चतस्रश्च ननान्दा दुहिता तथा ।
याता मातेति सप्तैते स्वस्रादय उदाहृताः ॥

— कविः, भानुः. —

कविम्, भानुम्.

शेषो घ्यसखि. (अनदी) इदुतौ.

आङो नाऽस्त्रियाम्. घेः. कविना, भानुना.

139 घेर्ङिति. गुणः. कवये, भानवे, कवेः, भानोः.

अच्च घेः, इदुद्भ्यां परस्य ङेरौत्.

कवौ, भानौ. कवी, भानू. कविभ्याम्, भानुभ्याम्. कव्योः, भान्वोः.

कवयः, भानवः. कवीन्, भानून्.

कविभिः, कविभ्यः, कवीनाम्.

पतिः समास एव, घिः. भूपतिना, नृपतिना, भूपतये, भूपतेः, भूपतेः, भूपतौ, पत्या, पत्ये.



अनङ् सौ. असम्बुद्धौ सखिशब्दस्य.

सर्वनामस्थाने चासम्बुद्धौ, दीर्घो नोपधायाः.

— सखा.

सख्युरसम्बुद्धौ, सर्वनामस्थानं णित्.

सखायौ, सखायः. सखायम्, सखायौ, सख्या, सख्ये.

ख्यत्यात्परस्य, ङसिङसोरत उत्.

सख्युः, पत्युः.

146 औत्, इदुद्भ्यां ङेः. सख्यौ, पत्यौ.

पती, पतिभ्याम्, सखिभ्याम्, सख्योः,

पत्योः, पतयः, सखीन्, पतीन्, सखिभिः, पतिभिः, सखीनाम्, पतीनाम्, सखिषु, पतिषु.

---

ऋदुशनस्पुरुदंसोऽनेहसाञ्च, अनङ् सावसम्बुद्धौ.

माता, पिता.

ऋतो ङिसर्वनामस्थानयोः, गुणः.

उरण् रपरः, (ऋकारस्थानेऽण्.)

मातृ, पितृ, भ्रातृ, दुहितृ.

मातरौ, पितरौ, मातरः, पितरः.

हे मातः! पितः! मातरम्, पितरम्.

मातॄः, पितॄन्, मात्रा, पित्रा.

मात्रे, पित्रे, मातृभ्याम्, पितृभ्याम्.

ऋत उत्, ङसिङसोरति एकः पूर्वपरयोः.

161 रात्सस्य, संयोगान्तस्य लोपः.

मातुः, पितुः, मात्रोः, पित्रोः.

मातॄणाम्, पितॄणाम्, मातरि, पितरि.

मातृषु, पितृषु.

---

(स्वसृ)

स्वसा, स्वसः !

अप्तृन्तृच्-स्वसृ-नप्तृ-नेष्टृ-त्वष्टृ-क्षत्तृ-होतृ-पोतृ-प्रशास्तॄणाम्. उपधाया दीर्घोऽसम्बुद्धौ सर्वनामस्थाने.

स्वसारौ, स्वसारः, स्वसारम्, स्वसॄः, स्वस्रा, स्वसृभ्याम्, स्वसृभिः.

(अप्.)

आपः, अपः.

अपो भि. तः.

अद्भिः, अद्भ्यः, अपाम्, अप्सु.

(गिर्, पुर्.)

र्वोरुपधाया दीर्घ इकः. धातोः पदान्ते.

गीः, पूः. गिरौ, पुरौ. गीर्भ्याम्, पूर्भ्याम्.

---

(शुचि, अम्बु.)

155 स्वमोर्नपुंसकात्. लुक्. - अम्बु, शुचि.

इकोऽचि विभक्तौ, नुम् नपुंसकस्य.

अम्बुना, अम्बुने, अम्बुनः, अम्बुनि.

नपुंसकाच्च, औङः शी. अम्बुनी, अम्बुभ्याम्.

जश्शसोः शिः, नपुंसकात्.

शि सर्वनामस्थानम्.

अम्बूनि, अम्बुभिः, अम्बुनाम्, अम्बुषु.

त्रीणि, चत्वारि.

(फल, जल)

अतोऽम्. स्वमोर्नपुंसकात्, फलम्, फले.

अद्ड्डतरादिभ्यः पञ्चभ्यः, स्वमोर्नपुंसकात्.

अन्यत्.

नपुंसकस्य झलचः, नुम् सर्वनामस्थाने.

फलानि. किम्, के, कानि.

(यशस्)

यशः, यशसी.

163 सान्तमहतः संयोगस्य, दीर्घो नोपधायाः,

सर्वनामस्थाने चासम्बुद्धौ.

(सान्तसंयोगस्य महतश्च नस्योपधायाः.)

नश्चापदान्तस्य झलि, मोऽनुस्वारः.

यशांसि, यशसा, यशोभ्याम्, यशस्सु.

(नमस्, पयस्, पाथस्, अम्भस्)



महान्. महन्! महान्तम्, महता, महद्भ्याम्.

पुंसोऽसुङ्, सर्वनामस्थाने. (पुमस्)

पुमान्, पुमन्! पुमांसम्, पुंसा, पुम्भ्याम्.

राजा.

न ङिसम्बुध्योः, नलोपः प्रातिपदिकान्तस्य.

राजन्! राजानम्.

अल्लोपोऽनः. अङ्गस्य भस्य (अचि सुपि शसादौ)

राज्ञा, राजभ्याम्.

विभाषा ङिश्योः. अल्लोपोऽनो भस्य

राज्ञि, राजनि, राज्ञोः, राजसु.

इन् हन् पूषार्यम्णां शौ, दीर्घ उपधायाः.

170 सौ च, असम्बुद्धौ दीर्घ उपधाया इन् हन्

पूषार्यम्णाम्. पूषा, पूषणम्.

नाम, नाम्नी नामनी, नामानि
नाम्ना, नाम्नि नामनि, नामभ्याम्.

रोऽसुपि. अहन् शब्दस्य.

अहः, अहरहः, अहर्गणः.
अह्नी, अहनी, अह्ना, अह्नि, अहनि.

अहन्. (अस्य) रुः पदान्ते.

अहोभ्याम्, अहानि, अहोभिः, अह्नाम्.
अहस्सु.

न संयोगाद्वमन्तात्. अल्लोपोऽनः.

अध्वनि, अध्वना, कर्मणा, कर्मणि,
यज्वना, यज्वनि, ब्रह्मणा, ब्रह्मणि.

अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः.

तृतीयादिष्वचि, अस्थ्ना, दध्ना.

---

श्वा, श्वन्! श्वानम्.

इग्यणः संप्रसारणम्.

श्वयुवमघोनामतद्धिते, भानां संप्रसारणम्.

177 सम्प्रसारणाच्च, अचि पूर्वे एकः पूर्वपरयोः.

शुना, श्वभ्याम्, युवा, युवन्!

युवानम्, मघवा, मघवन्, मघवानम्.

न सम्प्रसारणे सम्प्रसारणम्.

यूना, युवभ्याम्, मघोना, मघवभ्याम्.



– सन्धिः –

(महान् तत्र तिष्ठति.)

नश्छव्यप्रशान्. रुः अम्परे. (विसर्गसत्त्वे)

अत्रानुनासिकः पूर्वस्य तु वा महाँस्तत्र.

अनुनासिकात्परोऽनुस्वारः. महांस्तत्र.

(अनुनासिकाभावपक्षे रोः पूर्वस्मात्परः.)

तांस्तान्, कांस्कान्.

पुमः खय्यम्परे, रुः. पुँस्कोकिलः.

पुंस्कोकिलः.

तोर्लि, परसवर्णः, उल्लेखः, अल्लोपः.

ङमो ह्रस्वादचि ङमुण् नित्यम्

प्रत्यङ् ङात्मा, सुगण् णीष्टे, सन् नेधते.

185 छे च. ह्रस्वस्य तुक्. वृक्षच्छाया, स्वच्छन्दम्.

आङ् माङोश्च, छेतुक्. आच्छादयति, माच्छिदत्.
दीर्घात्पदान्ताद्वा, तुक् छे. लता छाया.
ङः सि धुट्. वा. षट्त्सन्तः.
नश्च, सि धुड् वा. सन् त्सः.
शि तुक्, वा नः. सञ् च् शोभते.
शश् छोऽटि, वा. सञ् छोभते.



– सर्वनाम –

इदमो मः, सौ.
इदोऽय् पुंसि. सौ. अयम्.
दश्च. इदमो मः सुपि. इमम्.
अनाप्यकः, इदम इदः. अनेन. (टा + सुप्)
हलि लोपः, इदम इदः आपि.
असै, अस्मात्, अस्य, अस्मिन्.
इमौ, आभ्याम्, अनयोः, इमे, इमान्.
197 नेदमदसोरकोः, भिस ऐस्.
एभिः, एभ्यः, एषाम्, एषु.

यः सौ, इदमो दस्य.

इयम्, इमाम्, अनया, अस्यै, अस्याः, अस्याम्, इमे, आभ्याम्, अनयोः, इमाः, आभिः, आसाम्, आसु, इदम्, इमे, इमानि.

द्वितीयाटौस्स्वेनः, इदमेनदोरन्वादेशे.

एनम्, एनौ, एनान्, एनेन, एनयोः. एनाम्, एने, एनाः, एनया, एनयोः.

एनत् क्लीबे, स्वमोः. एनत् एने एनानि.

अदस औ सुलोपश्च. असौ.

अदसोऽसेर्दादु दो मः. अमुम्.

न मु ने, असिद्धः.

अमुना, अमुष्मै, अमुष्मात्, अमुष्य, अमुष्मिन्, अमू अमूभ्याम् अमुयोः.

204 एत ईद् बहुवचने. अदसो दात्, दो मः.

अमी अमून् अमीभिः अमीषाम् अमीषु.
असौ अमू अमूः. अमूम् अमू अमूः.

| | | |
|---|---|---|
| अमुया | अमूभ्याम् | अमूभिः |
| अमुष्यै | अमुष्याः | अमुष्याम्. |

| | | |
|---|---|---|
| अमूषाम् | अमुयोः | अमूषु. |
| अदः | अमू | अमूनि. |



प्लुतप्रगृह्या अचि नित्यम्. प्रकृत्या.

ईदूदेद् द्विवचनं प्रगृह्यम्.

कवी इमौ

गुरू इमौ

बाले इमे.

अदसो मात्. ईदूतौ प्रगृह्यौ.

जना अमी — अवश्यं यास्यन्ति.

जनौ अमू — ,, यास्यतः

स्त्रियौ ,, — ,, ,,

ऋत्यकः. वा प्रकृत्या स्युः.

सप्त ऋषयः सप्तर्षयः, सर्वर्तवः.

वर्षर्तुः, मेषर्क्षः.

209 वाक्यस्य टेः प्लुत उदात्तो दूराद्धूते.

एहि कृष्ण !!! ३ अत्र गौश्चरति.

सक्तून् पिब देवदत्त !!! ३.

है हे प्रयोगे हैहयोः. प्लुतः.

हे!!! राम. राम है!!!

गुरोरनृतोनन्त्यस्याप्येकैकस्य प्राचाम्.

दे!!! वदत्त, अयि देवद!!! त्त.

पदस्य. (अग्रेतनम्.)

पदात्.

अनुदात्तं सर्वमपदादौ.

युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयास्थयोर्वान्नावौ.

(पदात्परयोरपदादौ स्थितयोः षष्ठीचतुर्थीद्वितीया-स्थयोः युष्मदस्मदोः वाम् नौ.)

बहुवचनस्य वस्नसौ.

तेमयावेकवचनस्य.

218 त्वामौ द्वितीयायाः, एकवचनस्य.

| | | | |
|---|---|---|---|
| त्वा | वाम् | वः | द्वितीया. |
| ते | ,, | ,, | चतुर्थी. |
| ,, | ,, | ,, | षष्ठी. |
| मा | नौ | नः | द्वि. |
| मे. | ,, | ,, | च. |
| ,, | ,, | ,, | ष. |

मपर्यन्तस्य. (अग्रेतनम्.)

त्वाहौ सौ, युष्मदस्मदोः.

शेषे लोपः, युष्मदस्मदोरन्त्यस्य.

ङेप्रथमयोरम्. युष्मदस्मद्भ्याम्.

त्वम्, अहम्.

युवावौ द्विवचने, युष्मदस्मदोः.

प्रथमायाश्च द्विवचने भाषायाम्.

आ युष्मदस्मदोः. युवाम्, आवाम्.

यूयवयौ जसि. यूयम्, वयम्.

त्वमावेकवचने.

द्वितीयायां च, आ. त्वाम्, माम्.

शसो न, युष्मदस्मद्भ्यां परस्य.

युष्मान्, अस्मान्.

योऽचि, युष्मदस्मदोरनादेशे.

त्वया, मया.

230 युष्मदस्मदोरनादेशे, आ हलि विभक्तौ.

युवाभ्याम्, आवाभ्याम्.

युष्माभिः, अस्माभिः.

तुभ्यमह्यौ ङयि. तुभ्यम्, मह्यम्.

भ्यसो भ्यम्. युष्मभ्यम्, अस्मभ्यम्.

एकवचनस्य च. पञ्चम्या अत्. त्वत्, मत्.

पञ्चम्या अत्, भ्यसः. युष्मत्, अस्मत्.

तवममौ ङसि.

युष्मदस्मद्भ्यां ङसोऽश्. तव, मम.

युवयोः, आवयोः.

साम आकम्. युष्माकम्, अस्माकम्.

त्वयि, मयि, युष्मासु, अस्मासु.



अनुदात्तङित आत्मनेपदम्. एधते.

धात्वादेः षः सः. स्वयते.

स्वरितञितः कर्त्रभिप्राये क्रियाफले.

—आत्मनेपदम्. पचति, पचते.

णो नः, धात्वादेः. नयति. नयते.

शेषात्कर्तरि परस्मैपदम्. भवति.

243 लटः शतृशानचावप्रथमासमानाधिकरणे.

भवन्, खादन्, नयन्.

आने मुक्, धातोः. एधमानः, स्मयमानः.

कर्तरि कृत्. (कृदतिङ् धातोः.)

ण्वुल्तृचौ, धातोः.

युवोरनाकौ, भावकः, नायकः.

आर्धधातुकं शेषः, (तिङ् शित् भिन्नः.)

आर्धधातुकस्येड् वलादेः, भविता, एधिता.

गत्यर्थाकर्मकादिभ्यः, क्तः (कर्तरि.)
इतः, यातः, स्नातः, भूतः.

पदरुजविशस्पृशो घञ्.

अत उपधायाः, वृद्धिञ्णिति. पादः.

पुगन्तलघूपधस्य च, इको गुणः सार्वधातुकार्ध-
धातुकयोः. वेशः, स्पर्शः.

चजोः कु घिण्ण्यतोः. रोगः.

अन्येभ्योऽपि दृश्यते, धातुभ्यः क्विप् कार्यान्तरं च.
(लोपदीर्घसम्प्रसारणादि)

वेरपृक्तस्य, लोपः. भूः, भ्रूः, श्रीः, धीः.

ह्रस्वस्य पिति कृति तुक्. इत्, कृत्.

258 क्तक्तवतू निष्ठा.

निष्ठा, भूते. भूतवान्, कृतवान्, जितवान्, नीतवान्, हृतवान्.

क्किङिति च, नेक्तो गुणः. भूतम्.

तयोरेव कृत्यक्तखलर्थाः.
(भावकर्मणोः) स्नातम्. कृतः, धृतः.

कृत्याः प्राङ् ण्वुलः.

तव्यत्तव्यानीयरः, धातोः. (गमनीयम्)
भवितव्यम्, भवनीयम्, गन्तव्यः.
गमनीयः, (ग्रामः) कर्तव्यः, करणीयः.

अचो यत्. धातोः. जेयः, नेयः.

ईद्यति, आतः. देयः.

ऋहलोर्ण्यत्. कार्यम्, खाद्यम्.

ओरावश्यके, भाव्यम्.

ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल्.
ईषत्करः, दुष्करः, सुकरः.
(सुखेन कर्तुं योग्यो दुःखेन वा)

नपुंसके भावे क्तः. भूतम्, रुतम्, कृतम्.

270 ल्युट् च. हसनम्, गमनम्, भवनम्.

स्त्रियां क्तिन्. भूतिः, कृतिः, नीतिः.

गुरोश्च हलः, अ. ईहा, ऊहा.

इक्श्तिपौ धातुनिर्देशे. गमिः, गच्छतिः.



सर्वस्य द्वे.

नित्यवीप्सयोः. (पौनःपुन्ये वीप्सायां च पदस्य द्वे वचने.) पचति पचति, भुक्त्वा भुक्त्वा, वृक्षं वृक्षं सिञ्चति, ग्रामो ग्रामो रमणीयः.

परेर्वर्जने. परि परि वङ्गेभ्यः वृष्टो देवः.

उपर्यध्यधसः सामीप्ये. उपरि उपरि ग्रामम्. अध्यधि सुखम्. अधोऽधो लोकम्.

वाक्यादेरामन्त्रितस्यासूयासम्मतिकोपकुत्सनभर्त्सनेषु.

असूयायाम्, सुन्दर सुन्दर वृथा ते सौन्दर्यम्.

सम्मतौ, वेदे वेदे वन्द्योऽसि.

कोपे, दुर्विनीत दुर्विनीत इदानीं ज्ञास्यसि.

कुत्सने, धानुष्क धानुष्क वृथा ते धनुः.

भर्त्सने, चोर चोर घातयिष्यामि त्वाम्.

279 आनुपूर्व्ये द्वे वाच्ये, मूले मूले स्थूलः.

संभ्रमेण प्रवृत्तौ यथेष्टमनेकधा प्रयोगो न्याय-
सिद्धः. सर्पं सर्पं बुध्यस्व, सर्पं सर्पं सर्पं
बुध्यस्व बुध्यस्व बुध्यस्व.

क्रियासमभिहारे च. लुनीहि लुनीहीति (लुनाति)

कर्मव्यतिहारे सर्वनाम्नो द्वे वाच्ये समासवच्च
बहुलम्. क्रियाविनिमयः कर्मव्यतिहारः,
अन्योन्यं नमन्ति विप्राः.



– धातुसम्बन्धे प्रत्ययाः –

समानकर्तृकेषु तुमुन्. कर्तुं याति भोक्तुम्.

आभीक्ष्ण्ये णमुल्च. समानकर्तृकेषु नामं नामं
याति गुरुम्. नत्वा नत्वा.

अलं खल्वोः प्रतिषेधयोः प्राचां क्त्वा.
अलं कृत्वा, भुक्त्वा खलु.

286 समानकर्तृकयोः पूर्वकाले, क्त्वा.
स्नात्वा भुक्त्वा व्रजति.

समासेऽनञ्पूर्वे क्त्वो ल्यप्.

सम्भूय यान्ति, प्रकृत्य वदति.

— सन् —

धातोः कर्मणः समानकर्तृकादिच्छायां वा.

सन्. (भवितुमिच्छति.)

सनाद्यन्ता धातवः. (भू स लट्.)

(पूर्ववत्सनः.)

सन्यङोः. एकाचो द्वे प्रथमस्य.

अजादेर्द्वितीयस्य. (भूस भूस शप् ति.)

ह्रस्वः, अभ्यासस्याचः. (भुस भूषति.)

पूर्वोऽभ्यासः.

हलादिः शेषः. अभ्यासस्य. (अन्यहलो लोपः)

(भु भूषति.)

अभ्यासे चर्च, झलां जश्. बुभूषति.

295 सन्यतः, इदभ्यासस्य. पिपठिषति.

---

सन्क्यच्काम्यच्क्यङ्क्यषोऽथाचारक्विप्णिज्यङौ तथा।
यगाय ईयङ्णिङ्चेति द्वादशामी सनादयः ॥

— णिच् —

(कर्तुः)

तत्प्रयोजको हेतुश्च, कर्ता.

हेतुमति च, (प्रेरणे) णिच् धातोः.

(भू + णिच् + शप् + लट्.)

भावयति, कारयति. (भवन्तं प्रेरयति)

— क्यच् —

सुप आत्मनः क्यच्. कर्मण इच्छायाम्.

(पुत्रमात्मन इच्छति – पुत्र अम् क्यच् लट्.)

सुपो धातुप्रातिपदिकयोः, लुक्.

क्यचि च, ईदकारस्य. पुत्रीयति.

काम्यच् च, सुपः कर्मण आत्मन इच्छायाम्

. पुत्रकाम्यति.

उपमानादाचारे, क्यच्, सुपः कर्मणः.

(पुत्रमिवाचरति छात्रं) पुत्रीयति.

कर्तुः क्यङ् सलोपश्च, सुप उपमानादाचारे.

काणायते, अप्सरायते.

304 अकृत्सार्वधातुकयोर्दीर्घः, अचो यि.



कर्मण्यण् , धातोरुपपदे. कुम्भकारः.

तत्रोपपदं सप्तमीस्थम् .

उपपदमतिङ्, (समस्यते न तिङा)

कुम्भं करोति (कुम्भ + अम् + कृ + अण्).

सुप्यजातौ णिनिस्ताच्छील्ये, शीतभोजी

शीतं भुङ्क्ते तच्छीलः-

— समासः —

चार्थे द्वन्द्वः, समासः. धवखदिरौ.

फलमूलप्रवालम् . (धव + सु + खदिर + सु.)

द्वन्द्वे घि, पूर्वम्. रविचन्द्रौ. कविगायकौ.

अजाद्यदन्तम् , पूर्वम् . अश्ववृषभौ, अजगजौ.

अल्पाच्तरम्. पूर्वम् . गोमहिषौ, मूलप्रवालम् .

लघ्वक्षरम् , पूर्वम् . कुशकाशौ. गुणदोषौ.

अभ्यर्हितं च, पूर्वम् . तापसपर्वतौ. ब्रह्मस्तम्बे.

भ्रातुर्ज्यायसः. पूर्वनिपातः. युधिष्ठिरार्जुनौ.

आनङ् ऋतो द्वन्द्वे, उत्तरपदे. मातापितरौ.

317 देवताद्वन्द्वे च, आनङुत्तरपदे. सूर्याचन्द्रमसौ.

— एकशेषः —

सरूपाणामेकशेष एकविभक्तौ,

(गज-गज-औ) गजौ.

पुमान् स्त्रिया, (स्त्रिया सहोक्तौ पुमान् शिष्यते)

हंसौ, हंसी च हंसश्च.

भ्रातृपुत्रौ स्वसृदुहितृभ्याम्.

भ्रातरौ, स्वसा च भ्राता च.

पुत्रौ, दुहिता च पुत्रश्च.

पिता मात्रा, वा शिष्यते. पितरौ.

माता पितरौ, माता च पिता च.

श्वशुरः श्वश्र्वा, श्वशुरौ. श्वश्रूश्वशुरौ.

श्वश्रूश्च श्वशुरश्च.

त्यदादीनि सर्वैर्नित्यम्, शिष्यन्ते.

स च देवदत्तश्च, तौ.

— कर्मधारयः —

324 विशेषणं विशेष्येण बहुलम्, समस्यते.

प्रथमानिर्दिष्टं समास उपसर्जनम्.

उपसर्जनं पूर्वम्, समासे. नीलोत्पलम्,

नीलमुत्पलम्. कृष्णसर्पः.

उपमानानि सामान्यवचनैः, समस्यन्ते.

मेघश्यामः, मेघ इव श्यामः.

उपमितं व्याघ्रादिभिः सामान्याप्रयोगे.

कविकुञ्जरः, पुरुषव्याघ्रः, नरसिंहः,

ना सिंह इव शूरः.

— तत्पुरुषः —

द्वितीया श्रितादिभिः, कृष्णश्रितः,
दुःखातीतः, आपन्नासः, काशीगतः.

— नञ् —

नञ्. सुपा समस्यते. न कीर्त्तिः.

नलोपो नञः, उत्तरपदे. अकीर्त्तिः, अधेयः.

तस्मान्नुडचि, (लुप्तनकारात्.) अनश्वः,
अनन्तरम्, अविघ्नम्, असंशयम्, अधनः,
अफलः, अगाधः, अनाथः, अनर्हः, अकर्मकः.

— बहुव्रीहिः —

अनेकमन्यपदार्थे. समस्यते स बहुव्रीहिः.
पीताम्बरः, शुक्लाम्बरः. (पीतमम्बरं यस्य सः)

उरः प्रभृतिभ्यः कप्. बहुव्रीहौ.
व्यूढोरस्कः, प्रियसर्पिष्कः, बहुपयस्का.

शेषाद्विभाषा, कप्. वीरपुरुषको देशः,
प्राप्तोदको ग्रामः, ऊढरथो वृषभः,
उपहृतपशू रुद्रः, उद्धृतौदना स्थाली.

341 तेन सहेति तुल्ययोगे. समासो बहुव्रीहिः.

वोपसर्जनस्य. सहस्य सः.

सपुत्रः, सकर्मकः, सलोमकः.

प्रकृत्याशिषि, सहः. स्वस्ति ते सहपुत्राय सहदाराय.

सुहृद्दुर्हृदौ मित्रामित्रयोः.

सप्तमीविशेषणं बहुव्रीहौ. पूर्वम्.

कण्ठेकालः, उरसिलोमा.

अलुगुत्तरपदे, सुपः समासे. स्तोकान्मुक्तः, अन्तिकादागतः, युधिष्ठिरः.

वैयाकरणाख्यायां चतुर्थ्याः. अलुगुत्तरपदे.

आत्मनेपदम्, परस्मैपदम्,
आत्मनेभाषाः, परस्मैभाषाः.



— आख्यातः —

348 आदिप्रभृतिभ्यः शपः, लुक्.

| | | |
|---|---|---|
| अत्ति | अत्तः | अदन्ति |
| त्सि | त्थः | त्थ |
| द्मि | द्वः | द्मः |

आस्ते साते
स्से साथे
से स्महे

आत्मनेपदेष्वनतः. परस्य झस्यात्.
आसते
धि च. सलोपः. आध्वे
आस्महे.

जुहोत्यादिभ्यः श्लुः. शपः.
श्लौ. एकाचो द्वे प्रथमस्य.
कुहोश्चुः, अभ्यासस्य. जुहोति, हुतः.
होषि, हुथः.
होमि, हुवः.

उभे अभ्यस्तम्.
अदभ्यस्तात्, झस्य.
हुश्नुवोः सार्वधातुके, ओर्यण् अनेकाचोऽसं-
योगपूर्वस्य अचि. जुह्वति,
जुहुथ, जुहुमः.
दिवादिभ्यः श्यन्. कर्तरि सार्वधातुके.
358 हलि च. धातोः र्वोरुपधाया दीर्घ इकः.

दीव्यति दीव्यतः दीव्यन्ति.

दूयते दूयेते दूयन्ते.

स्वादिभ्यः श्नुः, कर्तरि सार्वधातुके.

सुनोति, सुनुतः, सुन्वन्ति.

लोपश्चास्यान्यतरस्यां म्वोः.

उतः प्रत्ययादसंयोगपूर्वात्.

सुन्वः, सुन्मः, सुनुते.

तुदादिभ्यः शः, कर्तरि सार्वधातुके.

तुदति, तुदतः, तुदन्ति. तुदते.

रुधादिभ्यः श्नम्, कर्तरि सार्वधातुके.

झषस्तथोर्धोऽधः, रुणद्धि.

श्नसोरल्लोपः, क्ङिति सार्वधातुके.

झरो झरि सवर्णे, वा लोपो हलः परस्य.

रुन्द्धः, रुन्धन्ति, रुन्धे.

तनादिकृञ्भ्य उः, कर्तरि सार्वधातुके,

तनोति, तनुतः, तन्वन्ति.

367 क्र्यादिभ्यः श्ना, कर्तरि सार्वधातुके.

क्रीणाति, क्रीणासि, क्रीणामि.

ई हल्यघोः, क्ङिति सार्वधातुके, श्नाभ्यस्तयोरातः.

क्रीणीतः, क्रीणीथः, क्रीणीवः.

श्नाभ्यस्तयोरातः, लोपः क्ङिति सार्वधातुके.

क्रीणन्ति, क्रीणाते, क्रीणते.

चुरादिभ्यो णिच्, (स्वार्थे) चोरयति.

णिचश्च, आत्मनेपदं कर्त्रभिप्राये क्रियाफले.

चोरयते, भावयते.



— कर्तरि दश लः —

लोट् च, धातोर्विध्यादिषु (प्रवर्तनायाम्)

अशिषि लिङ्लोटौ.

विध्याशीरादिषु लोट्.

एरुः, लोटः, भवतु.

तुह्योस्तातङ्ङाशिष्यन्यतरस्याम्.

सेर्ह्यपिच्च, लोटः. भवतात्.

अतो हेः, लुक्. भव, भवतात्.

378 मेर्निः, लोटः.

आडुत्तमस्य पिच्च,   लोटः.   भवानि.

लोटो लङ्वत्.

तस्थस्थमिपां तान्तन्तामः,   ङितः लः

भवताम्, भवतम्.

नित्यं ङितः,   लोपः सस्योत्तमस्य.

भवाव, भवन्तु. भवत. भवाम.



– अनद्यतनभूते लङ्. –

अनद्यतने लङ्,   भूते धातोः.

लुङ्लङ्लृङ्क्ष्वडुदात्तः,   धातोः.

इतश्च,   लोपो ङितो लस्य.

| | | |
|---|---|---|
| अभवत् | वताम् | वन् |
| वः | वतम् | वत |
| वम् | वाव | वाम. |

विधिनिमन्त्रणामन्त्रणाधीष्टसम्प्रश्नप्रार्थनेषु लिङ्.

धातोः.

387 यासुट् परस्मैपदेषूदात्तो ङिच्च,   लिङः.

लिङः सलोपोऽनन्त्यस्य, सार्वधातुकस्य.

( भव + यात्. )

अतो येयः, सार्वधातुकस्य.

भवेत्, भवेताम्, भवेः, भवेयम्.

झेर्जुस्, लिङः. भवेयुः, भवेम.

— आशीर्लिङ् —

लिङाशिषि, आर्धधातुकम्.

किदाशिषि, यासुट्. (भू यास् ति).

स्कोः संयोगाद्योरन्ते च, पदस्य, झलि च.

| | | |
|---|---|---|
| भूयात् | यास्ताम् | यासुः |
| याः | यास्तम् | यास्त |
| यासम् | यास्व | यास्म |

— भूते लुङ् —

लुङ्, भूते धातोः.

माङि लुङ्, - धातोरुपपदे.

स्मोत्तरे लङ् च, माङि लुङ्.

397 न माङ्योगे, अडाटौ. मा भवान् भूत्.

च्लि लुङि, धातोः.

च्लेः सिच् ·

गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेषु, लुक् ·

अभूत् , अभूः.

भुवो वुग्लुङ्लिटोः, अचि. अभूवम्.

— भूतानद्यतनपरोक्षे लिट् —

परोक्षे लिट् , भूतेऽनद्यतने च धातोः.

लिटि धातोरनभ्यासस्य, एकाचोद्वे प्रथमस्य.

भवतेरः, अभ्यासोकारस्य.

लिट् च, आर्धधातुकम् .

परस्मैपदानां णलतुसुस्थलथुसणल्वमाः, लिटः.

| | | | | | |
|---|---|---|---|---|---|
| णल् अतुस् उस्. | | | बभूव | बभूवतुः | बभूवुः |
| थल् अथुस् अ. | | | बभूविथ | बभूवथुः | बभूव |
| णल् | व | म. | बभूव | बभूविव | बभूविम. |

— भविष्यति लृट् —

407 लृट् शेषे च, भविष्यति क्रियायां क्रियार्थायां धातोः.

स्यतासी लृलुटोः,

| | | |
|---|---|---|
| भविष्यति | तः | न्ति |
| ष्यसि | ष्यथः | ष्यथ |
| ष्यामि | ष्यावः | ष्यामः. |

— अनद्यतनभविष्यति लुट् —

अनद्यतने लुट्, भविष्यतिधातोः.

लुटः प्रथमस्य डारौरसः, (पुरुषस्य.)

टेः, लोपो डिति. भविता.

तासस्त्योर्लोपः, सि प्रत्यये. भवितासि.

रि च, तासस्त्योर्लोपः.

भवितारौ, भवितारः. तास्थः, तास्थ.

तास्मि, स्वः स्मः.

लिङ्निमित्ते लृङ् क्रियातिपत्तौ, धातोः.

( क्रियाया अनिष्पत्तिः )

अभविष्यत्, अभविष्याम.

आडजादीनाम्, धातूनां लुङ्लङ्लृङ्षु.

416 आटश्च, अचि वृद्धिः.

ष्टुना ष्टुः, स्तोः.

ऐधिष्ट षाताम् षत.

ष्ठाः षाथाम् ध्विध्वम्

षि ष्वहि ष्महि

आमेतः, लोटः. एधताम्.

सवाभ्यां वामौ, लोट एतः.

एधस्व, एधध्वम्.

एत ऐ, लोट उत्तमस्य.

एधै, ऐधत, ऐधथाः, ऐधे.

लिङः सीयुट्, एधेत, एधेयाताम्.

झस्य रन्, लिङः. एधेरन्, एधेथाः.

इटोऽत्, लिङः. एधेय, एधेवहि.

सुट्तिथोः, लिङः. एधिषीष्ट, एधिषीयास्ताम्.

इणः षीध्वंलुङ्लिटां धोऽङ्गात्, मूर्धन्यः.

एधिषीढ्वम्, एधिषीय.

एधिष्यते, एधिता.

426 ह एति, तासस्त्योः सस्य. एधिताहे,

एधितास्वहे, एधितास्महे, ऐधिष्यत.

इजादेश्च गुरुमतोऽनृच्छः,
धातोः परे आम् लिटि.

आमः, परस्य लुक्.

कृञ्चानुप्रयुज्यते लिटि, (कृभ्वस्तयो लिट्पराः
आमन्तात्. एधाम् कृ लिट्.)

आम्प्रत्ययवत्कृञोऽनुप्रयोगस्य, आत्मनेपदम्.

लिटस्तझयोरेशिरेच्.

असंयोगाल्लिट् कित्, अपित्.

द्विर्वचनेऽचि, द्विर्वचने कर्तव्ये द्विर्वचननिमित्ते
अचि परे नाच आदेशः.
(एधाम् कृ + कृ + ए.)

उरत्, अभ्यासस्य. (प्रत्यये परे.)
एधाञ्चक्रे चक्राते चक्रिरे.

435 एकाच उपदेशेऽनुदात्तात्. धातो नेट्.
आर्धधातुकस्य वलादेः.

ऊदृदन्तैर्यौतिरुक्ष्णुशीङ्स्नुक्षुश्विडीङ्श्रिभिः ।
वृङ्वृञ्भ्यां च विनैकाचोऽजन्तेषु निहताः स्मृताः ॥
एधाञ्चकृषे. एधांबभूव, वतुः.
(एधाम् भ अस् अ.)

अत आदेः, अभ्यासस्य दीर्घः.
पपाचास सतुः.

शक्ल पच् मुच् रिच् विच् वच् सिच् प्रच्छि त्यज् निजिर् भजः । भञ्ज् भुज् भ्रस्ज् मस्जि यज् युज् रुज् रञ्ज् विजिर् स्वञ्जि सञ्ज् सृजः ॥ १ ॥ अद् क्षुद् खिद् छिद् तुदि नुदः पद्य भिद् विद्यतिर्विनद् शद् सदी स्विद्यति स्कन्दि हदी क्रुध् क्षुधि बुध्यती ॥ २ ॥ बन्धिर् युधि रुधी राधिर् व्यध् शुधः साधि सिध्यती । मन्य हन्नाप् क्षिप् छुपि तप् तिपस्तृप्यति दृप्यती ॥ ३ ॥ लिप् लुप् वप् शप् स्वप् सृपि यभ् रभ् लभ् गम् नम् यमो रमिः । क्रुशिर् दंशि दिशी दृश् मृश् रिश् रुश् लिश् विश् स्पृशः कृषिः ॥ ४ ॥ त्विष् तुष् द्विष् दुष् पुष्य पिष् विष् शिष् शुष् श्लिष्यतयो घसिः । वसति-र्दह् दिहि दुहो नह् मिह् रुह् लिह् वहिस्तथा ॥५॥ अनुदात्ता हलन्तेषु धातवो द्व्यधिकं शतम् ॥

— भावे कर्मणि —

(तेन) बभूवे, भविता, भविष्यते भूयताम् अभूयत भूयेत भविषीष्ट.

437 स्यसिच्सीयुट्तासिषु भावकर्मणोरुपदेशेऽज्झन-

ग्रहदृशां वा चिण्वदिट् च.

भाविता, भाविष्यते भाविषीष्ट.

चिण् भावकर्मणोः, ते च्लेः.

चिणो लुक्, (परस्य) अभावि.

अन्वभाविषाताम्.

— भावि —

स्तूयते स्तोता स्ताविता.
स्तूयताम् स्तोष्यते स्ताविष्यते
अस्तूयत स्तोषीष्ट स्ताविषीष्ट
स्तूयेत अस्तावि. दीयते, दास्यते.

440 आतो युक् चिण्कृतोः, ञ्णिति.

अदायि अदिषाताम् अदायिषाताम्
दायिष्यते धीयते धास्यते अधायि
अधिषाताम् अधायिषाताम्
धायिष्यते धाता धायिता
हन्यते हन्ता घानिता हनिष्यते
घानिष्यते.

—o—

— नाम —

नाभ्यस्ताच्छतुः, नुम्. ददत्, ददती.

वा नपुंसकस्य, अभ्यस्ताच्छतुर्नुम् सर्वनामस्थाने.

ददन्ति, ददति.

आच्छीनद्योर्नुम्, वा शतुः. तुदन्ती, तुदती.

शप्श्यनोर्नित्यम्, आच्छतुर्नुम्शीनद्योः.

(पचत्), पचन्ती, पचन्ति.

दीव्यन्ती, दीव्यन्ति.



— स्त्रीप्रत्ययः —

ऋन्नेभ्यो ङीप्, स्त्रियाम्. कर्त्री,

शीतभोजिनी.

उगितश्च, ङीप्, स्त्रियाम्.

पचन्ती, भवन्ती.

वयसि प्रथमे, ङीप्. कुमारी.

बहुव्रीहेरूधसो ङीष्.

ऊधसोऽनङ्, बहुव्रीहौ स्त्रियाम्. कुण्डोध्नी.

450 अन्तर्वत्पतिवतोर्नुक्, अन्तर्वत्नी, पतिवत्नी.

पत्युर्नो यज्ञसंयोगे, वसिष्ठस्य पत्नी.

नित्यं सपत्न्यादिषु, सपत्नी, एकपत्नी, वीरपत्नी.

वर्णादनुदात्तात्तोपधात्तो नः.

रोहिणी, रोहिता.

जानपद कुण्ड गोण स्थल भाज नाग काल-नील कुश कामुक कबराद् वृत्त्यमत्रावपना-कृत्रिमाश्राणा स्थौल्यवर्णा नाच्छादना यो-विकार मैथुनेच्छा केशवेशेषु, ङीप्.

जानपदी वृत्तिश्चेत्.

शोणात्प्राचाम्, वा ङीप्. शोणी, शोणा.

वोतो गुणवचनात्, ङीष्. मृद्वी, मृदुः.

बह्वादिभ्यश्च, ङीष्. बह्वी, बहुः.

पुंयोगादाख्यायाम्. ङीष्. नित्यम्. गोपी.

459 इन्द्र वरुण भव शर्व रुद्र मृड हिमारण्य यव यवन-मातुलाचार्याणामानुक्. ङीष् पुंयोगादाख्यायाम्.

इन्द्राणी, भवानी.

हिमारण्ययोर्महत्त्वे. हिमानी, अरण्यानी.

यवाद्दोषे. यवानी.

यवनाल्लिप्याम्. यवनानी.

मातुलोपाध्याययोरानुग्वा. मातुली, मातुलानी, उपाध्यायी, यानी.

आचार्यादणत्वम्. आचार्यानी.

स्वांगाच्चोपसर्जनादसंयोगोपधात्, वा.

अतिकेशी, अतिकेशा, चन्द्रमुखी, चन्द्रमुखा,

नासिकोदरौष्ठजङ्घादन्तकर्णशृङ्गाच्च.

तुंगनासिकी, स्थूलोदरी.

न क्रोडादिबह्वचः, कल्याणक्रोडा.

सहनञ्विद्यमानपूर्वाच्च. सकेशा, अकेशा.

नखमुखात्सञ्ज्ञायाम्. शूर्पणखा, गौरमुखा.

दिग्पूर्वपदान्ङीप्. प्राङ्मुखी.

सख्यशिश्वीति भाषायाम्.

जातेरस्त्रीविषयादयोपधात्. तटी.

पाककर्णपर्णपुष्पफलमूलवालोत्तरपदाच्च.

ओदपाकी, शंकुकर्णी, शालपर्णी, शंखपुष्पी.

ऊङुतः. कुरूः, पङ्गूः.

470 ऊरूत्तरपदादौपम्ये. करभोरूः.

संहितशफलक्षणवामादेश्च· संहितोरूः, शफोरूः, लक्षणोरूः, वामोरूः.

शार्ङ्गरवाद्यञो ङीन्· शार्ङ्गरवी, बैदी.

---

– तद्धितः –

तद्धिताः·

यूनस्तिः· स्त्रियाम्. युवतिः.

तद्धितेष्वचामादेः, वृद्धिर्ञ्णिति किति च.

प्राग्दीव्यतो ऽण्·

तस्यापत्यम्·

ओर्गुणः, तद्धिते भस्य. औपगवः.

अत इञ्· तस्यापत्यम्.

यस्येति च, भस्य तद्धिते. दाशरथिः.

नडादिभ्यः फक्, तस्यापत्यम्.

आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्· नाडायनः, चारायणः.

433 गर्गादिभ्यो यञ्· गार्ग्यः.

अनृष्यानन्तर्ये बिदादिभ्योऽञ्.
बैदः, पौत्रः, दौहित्रः.

स्त्रीभ्यो ढक्. राधेयः, द्रौपदेयः, वैनतेयः.
शौभनेयः, सौमित्रेयः.

क्षत्राद् घः, तस्यापत्यम्. क्षत्रियः.
स्वसुश् छः, ,, स्वस्रीयः.
भ्रातुर्व्यच्च, ,, भ्रातृव्यः, भ्रात्रीयः.
कुलात् खः, ,, कुलीनः.
अपत्यं पौत्रप्रभृति गोत्रम्.
जीवति तु वंश्ये युवा.
क्षत्रियसमानशब्दाज्जनपदात्तस्य राजन्यपत्यवत्.
पाञ्चालः, कोसलः.

जनपदे लुप्, लुपि युक्तवद्व्यक्तिवचने.
तेन रक्तं रागात्, अण्. काषायम्.
नक्षत्रेण युक्तः कालः. कार्तिकमहः.
संस्कृतं भक्षाः. भ्राष्ट्रायवाः.
सास्मिन् पौर्णमासीति. चैत्री.
497 प्राग्दिशो विभक्तिः.

किं सर्वनामबहुभ्योऽद्व्यादिभ्यः, परस्य.

पञ्चम्यास्तसिल्, वा. द्वाभ्याम्.

कुतिहोः, किमः. कुतः, कस्मात्, यतः, ततः.

एतदोऽन्, अतः.

इदम इश्, इतः, अमुतः, बहुतः.

पर्यभिभ्यां च, तसिल् सर्वोभयार्थाभ्याम्.

परितः = सर्वतः, अभितः = उभयतः.

सप्तम्यास्त्रल्. कुत्र, यत्र, तत्र, अमुत्र, बहुत्र.

इदमो हः, सप्तम्याः. इह.

किमोऽत्. सप्तम्याः वा.

काति, किमः. क, कुत्र, कस्मिन्.

इतराभ्योऽपि दृश्यन्ते, तसिलादयः.

(स भवान्) ततो भवान्, तत्रभवान्.

तं भवन्तम्, ततो भवन्तम्, तत्रभवन्तम्.

ततो देवानांप्रियः, तत्र देवानांप्रियः.

सर्वैकान्यकिंयत्तदः काले दा.

510 सर्वस्य सोऽन्यतरस्यां दि, सदा, सर्वदा,

एकदा, अन्यदा, कदा, यदा, तदा.

इदमोर्हिल्, सप्तम्याः काले.

एतेतौ रथोः, इदमः, एतर्हि.

अधुना, इदमः काले सप्तम्याः. अधुना.

दानीं च, इदमः काले सप्तम्याः. इदानीम्.

तदो दा च, काले सप्तम्या दानीं च.
तदा, तदानीम्.

अनद्यतने र्हिलन्यतरस्याम्. कर्हि, कदा,
यर्हि, यदा, तर्हि, तदा, एतर्हि.

प्रकारवचने थाल्, सर्वथा. यथा, तथा.

इदमस्थमुः, प्रकारवचने. इत्थम्.

किमश्च, थमुः प्रकारवचने. कथम्.

दिक्शब्देभ्यः सप्तमीपञ्चमीप्रथमाभ्यो दिग्देश-
कालेष्वस्तातिः.

पूर्वाधरावरणामसि पुरधवश्चैषाम्.
पुरः, पुरस्तात्, अधः, अधस्तात्,
अवः, अवस्तात्.

522 दक्षिणोत्तराभ्यामतसुच्. दक्षिणतः, उत्तरतः.

विभाषा परावराभ्याम्  परतः, अवरतः.
परस्तात्, अवरस्तात्.

अञ्चेर्लुक्. अस्तातेः.

लुक् तद्धितलुकि, स्त्रीप्रत्ययस्य.
प्राक्, उदक्, प्रत्यक्, अवाक्.

उपर्युपरिष्टात्, ऊर्ध्वस्य.

पश्चात्, अपरस्य.

एनवन्यतरस्यामदूरेऽपञ्चम्याः
उत्तरेण, दक्षिणेन, पूर्वेण, परेण, अधरेण

आहि च दूरे, दक्षिणादाच्. दक्षिणाहि.

किंयत्तदो निर्धारणे द्वयोरेकस्य डतरच्
कतरः, यतरः, ततरः, कः, यः, सः.

वा बहूनां जातिपरिप्रश्ने डतमच्.
कतमः, यतमः, ततमः.

एकाच्च प्राचाम्, डतरच् डतमच्.
अनयोरेकतरः, एषामेकतमः.

यत्तदेतेभ्यः परिमाणे वतुप्.

631 आ सर्वनाम्नः, इदमायतुपु. तावान्.

यावान्, एतावान्, यादृक्, यादृशः.

किमिदम्भ्यां वो घः, वतुप् च परिमाणे.

इदङ्किमोरीश्की, दृग्दृशवतुषु.

इयान्, कियान्, ईदृक्, कीदृक्.

किमः संख्यापरिमाणे डति च, वतुप्.

का संख्या येषां ते = कति, कियान्.

बहु गण वतु डति सङ्ख्या.

डति च, षट् सङ्ख्या. कति, कतिभिः.

विभाषा द्वितीयातृतीयाभ्याम्.

सर्वनामता ङिति. द्वितीयस्मै,

द्वितीयाय, द्वितीयस्यै, द्वितीयायै.

पूर्वादिभ्यो नवभ्यो वा, ङसिङ्योः स्मात्स्मिनौ.

पूर्वस्मात्, पूर्वात्, पूर्वस्मिन्, पूर्वे.

पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थाया -

मसंज्ञायाम्, जसि वा सर्वनामानि.

पूर्वे, पूर्वाः, अपरे, राः.

स्वमज्ञातिधनाख्याम्. जसि वा सर्वनाम.

544 अन्तरं बहिर्योगोपसंख्यानयोः, ,,

545 प्रथम चरम तयाल्पार्ध कतिपय नेमाश्च.

जसि वा सर्वनामानः. स्वे, स्वाः,
अन्तरे, अन्तराः, प्रथमे, प्रथमाः.

पूर्वार्ध सम्पूर्णम्.



## — अथ उत्तरार्धम् —



विदेः शतुर्वसुः, विद्वान्, विद्वांसौ.

वसोः सम्प्रसारणम्, भस्य. विदुषः.

वसु स्रंसु ध्वंस्वनडुहां दः, पदान्ते झलि च.

विद्वद्भ्याम्, विद्वत्सु.

अष्ट न आ विभक्तौ

अष्टाभ्य औश्, जश्शसोः.

अष्टौ, अष्टाभिः, अष्टानाम्, अष्टासु.

पथिमथ्यृभुक्षामात्, सौ.

इतोऽत्सर्वनामस्थाने, पथ्यादेः.

थोन्थः, पथिमथोः सर्वनामस्थाने. पन्थाः,

पन्थानौ, पन्थानः. पन्थानम्, पन्थानौ.

भस्य टे र्लोपः, पथ्यादेः.

पथः, पथा, पथिभ्याम्, पथिषु.

नीः, लूः.

565 अचि श्नु धातुभ्रुवां य्वोरियङुवङौ, प्रत्यये परे.

(आप्नुयन्ति) नियौ, लुवौ.

श्रीः, भ्रूः. श्रियौ, भ्रुवौ.

नेयङुवङ्स्थानावस्त्री, यू नदी.

हे श्रीः! भ्रूः! भ्रुवे, श्रिये.

(इ, उ, ई. ऊ.)

ङिति ह्रस्वश्च, यू च स्त्र्याख्यौ इयङुवङ्स्थानौ स्त्रियां वा नदी. श्रियै, भ्रुवै, श्रियाः, भ्रुवाः.

वाऽमि, नदी यू स्त्र्याख्यावियङुवङ्स्थानावस्त्री.

भ्रूणाम्, भ्रुवाम्, श्रीणाम्, श्रियाम्,
भ्रुवि, भ्रुवाम्, श्रीषु, भ्रूषु.
युवतिः, मतिः, धेनुः, तनुः,
युवत्यै, युवतये, धेन्वै, धेनवे.

इदुद्भ्याम्, नदीभ्यां ङेराम्.

युवत्याम्, युवतौ, धेन्वाम्, धेनौ.

स्त्री, हे स्त्रि!

स्त्रियाः, इयङ् अचि प्रत्यये. स्त्रियौ.

वाऽम् शसोः, स्त्रिया इयङ्. स्त्रियम्, स्त्रीम्.
स्त्रियौ, स्त्रियः, स्त्रीः, स्त्रिया, स्त्रीभ्याम्, स्त्रियै, स्त्रीणाम्, स्त्रियाम्, स्त्रीषु.

प्रधीः, (ग्रामणीः), सेनानीः.

562 एरनेकाचो ऽसंयोगपूर्वस्य, यण् अचि प्रत्यये धातोरङ्गस्य. प्रध्यौ, सेनान्यौ.

खलपूः, सुलूः.

ओः सुपि, अचि यण् अनेकाचोऽसंयोपूर्वस्य धातोरङ्गस्य. खलप्वौ, सुल्वौ.

वर्षाभ्वश्च, यण्. वर्षाभ्वौ.

न भू सुधियोः, यण्. भुवौ, सुधियौ.

आतो धातोः, च भस्य लोपः.

विश्वपाः, विश्वपौ, विश्वपाम्, विश्वपौ, विश्वपः, विश्वपा, विश्वपाभ्याम्.

गोपाः. क्त्वः, श्वः.

हो ढः, पदान्ते झलि च. लिट्, लिहौ.

व्रश्च भ्रस्ज सृज मृज यज राज भ्राज च्छशां षः.

पदान्ते झलि च. विट्, विशौ, विड्भ्याम्.

(प्राट्, सुवृट्, भृट्, विश्वसृट्, परिमृट्, देवयट्, राट्, विभ्राट्.)

569 पद्दन्नोमासृहृन्निशसन्यूषन्दोषन्यकञ्छकन्नुदन्ना-सञ्छस्प्रभृतिषु.

| | | | | |
|---|---|---|---|---|
| पाद | > | पद् | — | शस्प्रभृतिषु. |
| दन्त | > | दत् | | ,, |

| | | | |
|---|---|---|---|
| नासिका | ▷ | नस् | शस्प्रभृतिषु. |
| मास | ▷ | मास् | ,, |
| हृदय | ▷ | हृद् | ,, |
| निशा | ▷ | निश् | ,, |
| असृज् | ▷ | असन् | ,, |
| यूष | ▷ | यूषन् | ,, |
| दोष् | ▷ | दोषन् | ,, |
| यकृत् | ▷ | यकन् | ,, |
| शकृत् | ▷ | शकन् | ,, |
| उदक | ▷ | उदन् | ,, |
| आस्य | ▷ | आसन् | ,, |

पदः, पद्भ्याम्, दतः, दद्भ्याम्.
नसः, नोभ्याम्, मासः, माभ्याम्.
हृदः, हृद्भ्याम्, निशः, निड्भ्याम्.
अस्नः, असभ्याम्. यूष्णः, यूषभ्याम्.
दोष्णः, दोषभ्याम्, यक्नः, यकभ्याम्.
शक्नः, शकभ्याम्, उद्नः, उदभ्याम्.
आस्नः, आसभ्याम्.

पादः, पादौ, पादान्, पादाभ्याम्.
दन्तः, दन्तौ, दन्तान्, दन्ताभ्याम्.
नासिका, के, काः, काभ्याम्.

| | | | |
|---|---|---|---|
| मासः, | मासौ, | मासान् | मासाभ्याम्. |
| हृदयं | ये | यानि | हृद्याभ्याम्. |
| निशा, | शे, | शाः, | निशाभ्याम्. |
| असृक्, | जी, | ञ्जि, | असृग्भ्याम्. |
| यूषः, | षौ, | षान्. | यूषभ्याम्. |
| दोः, | षौ, | षः, | दोर्भ्याम्. |
| यकृत्, | ती, | न्ति, | यकृद्भ्याम्. |
| शकृत्, | ती, | न्ति | शकृद्भ्याम्. |
| उदकम्, | के, | कानि, | उदकाभ्याम्. |
| आस्यम्, | स्ये, | स्यानि, | आस्याभ्याम्. |

स्पृशोऽनुदके क्विन्. सुप्युपपदे.

क्विन्प्रत्ययस्य कुः, पदान्ते.

घृतस्पृक्, घृतस्पृशौ, घृतस्पृग्भ्याम्.

572 ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चु युजिक्रुञ्चाञ्च, क्विन्.

| | | |
|---|---|---|
| ऋत्विक्, | ऋत्विजौ | ऋत्विग्भ्याम्. |
| दधृक्, | दधृषौ, | दधृग्भ्याम्. |
| स्रक् | स्रजौ | स्रग्भ्याम्. |
| दिक् | दिशौ | दिग्भ्याम्. |
| उष्णिक्, | हौ | उष्णिग्भ्याम्. |

अनिदितां हल उपधायाः क्ङिति.
अंगानां न लोपः. ( प्रति + अच् )
प्रत्यङ्, प्रत्यञ्चौ.

अचः, अल्लोपो भस्य.
चौ, पूर्वस्य दीर्घोऽणः. प्रतीचः, प्राचः.
प्रतीचा, प्रत्यग्भ्याम्. उदङ्, ञ्चौ.

उद ईत्. (अचः), अतः, भस्य, अचः. (अञ्चु)
उदीचः, उदीचा, उदग्भ्याम्.
समः समि, अञ्चतावप्रत्यये. सम्यङ्. ञ्चौ.
तिरसस्तिर्यलोपे, अञ्चतावप्रत्यये. तिर्यङ्. ञ्चौ.
सहस्य सध्रिः, अलोपेऽञ्चतावप्रत्यये.
सध्र्यङ्, सध्र्यञ्चौ, सध्रीचः.
नाञ्चेः पूजायाम्, न लोपः. प्राञ्चः, प्राञ्चा,
प्राङ्भ्याम्. युङ्, युञ्जौ, युजः, युग्भ्याम्.
क्रुङ्, ञ्चौ, क्रुङ्भ्याम्.

581 त्यदादिषु दृशोऽनालोकने कञ्च. क्विन्.
(उपपदेषु) तादृक्, तादृशः.
यादृक्, एतादृक्, ईदृक्, अमूदृक्, कीदृशः,
त्वादृक्, मादृक्, युष्मादृक्, अस्मादृक्.

सास्यदेवता, ऐन्द्रः.

तस्य समूहः, काकम्, वाकम्.

तदधीते तद्वेद.

न य्वाभ्यां पदान्ताभ्यां, पूर्वौ तु ताभ्यामैच्.

वृद्धिः. वैयाकरणः.

तदस्मिन्नस्तीति देशे तन्नाम्नि, औदुम्बरः.

तेन निर्वृत्तम्, कौशाम्बी.

तस्य निवासः, शैवः.

अदूरभवश्च, वैदिशम्.

जनपदे लुप्. पञ्चालाः, कुरवः, मद्राः.

शेषे, चाक्षुषम्. (गृह्यते) श्रावणः.

दार्षदाः (पिष्टाः).

तत्र जातः, स्रौघ्न, राष्ट्रियः. (अण्घादिः).

सम्भूते, स्रौघ्नः.

उप्ते च, हैमन्ता यवाः.

देयमृणे, कालाट्ठञ्. मासिकम्.

व्याहरति मृगः, कालात्. नैशः.

597 तदस्य सोढम्, ,, ,,

तत्र भवः, स्रौघ्नः.

तस्य व्याख्यान इति च व्याख्यातव्यनाम्नः.

(ग्रन्थः) सौपः, तैङः, कार्तः, सौपम्. (भवम्.)

तत आगतः, स्रौघ्नः.

प्रभवति, हैमवतः.

अधिकृत्य कृते ग्रन्थे, किरातार्जुनीयम्.

तेन प्रोक्तम्, पाणिनीयम्.

उपज्ञाते, तेन. पाणिनीयम्.

कृते ग्रन्थे, तेन. वाररुचः.

तस्येदम्. औपगवम्.

तस्य विकारः, भास्मनः, राजतः, आयसः.

प्राग्वहतेष्ठक्, ठस्येकः.

तेन दीव्यति खनति जयति जितम्.

आक्षिकः, आभ्रिकः.

संस्कृतम्. तेन. दाधिकम्.

तरति, तेन. औडुपिकः.

चरति, तेन. शाकटिकः. (हास्तिकः).

6 13 वेतनादिभ्यो जीवति, वैतनिकः, जालिकः.

रक्षति. सामाजिकः.

तदस्य पण्यम् आपूपिकः.

शिल्पम्. तदस्य. मार्दंगिकः.

तत्र नियुक्तः . आकरिकः.

निकटे चरति. नैकटिकः.

प्राग् हिताद्यत्.

तद्वहति रथयुगप्रासङ्गम् रथ्यः, युग्यः.

नौवयो धर्मविषमूलमूलसीतातुलाभ्यस्तार्य तुल्य-
प्राप्यवध्यानाम्य समसमित सम्मितेषु
नाव्यम्.

वान्तो यि प्रत्यये वयस्यः, धर्म्यः, विष्यः,
मूल्यः, मूल्यम्, सीत्यम्, तुल्यम्.

तत्र साधुः, अग्र्यः.

प्राक् क्रीताच्छः.

तस्मै हितम्. वत्सीयः. (गोधुक्)

626 तदर्थं विकृतेः प्रकृतौ. अङ्गारीयाणि काष्ठानि.
प्राकारीया इष्टकाः.

तदस्य तस्मिन् स्यादिति. प्रासादीयं दारु.
प्राकारीयो देशः.

प्राग्वतेष्ठञ्.

तेन क्रीतम्. गौपुच्छिकम्, प्रास्थिकम्,
नैष्किकम्.

तस्य निमित्तं संयोगोत्पातौ. शतिकः.
धनिसंयोगः, दक्षिणाक्षिस्पन्दश्च.

तस्य वापः, प्रास्थिकम्, द्रौणिकम्.

तद्धरति वहत्यावहति भाराद्वंशादिभ्यः.
वांशभारिकः, आश्मभारिकः.

सम्भवत्यवहरति पचति. प्रास्थिकः, कटाहः,
पाचकश्च.

तदस्य परिमाणम्. प्रास्थिको राशिः.

तदर्हति. श्वैतच्छात्रिकः, कडङ्करीयो गौः.

दण्डादिभ्यो यत्. दण्ड्यः, वध्यः, अर्घ्यः.

तस्येश्वरः.

638 तत्र विदित इति च, अणञौ.
सार्वभौमः, पार्थिवः.

लोकसर्वलोकाट्ठञ् लौकिकः, सार्वलौकिकः.

अनुशतिकादीनां च, उभयपदवृद्धिः.

तेन तुल्यं क्रिया चेद्वतिः.

गजवत् याति स्त्री, राजवत्पुमान्याति.

तत्र तस्येव वतिः. मथुरावत् स्रुघ्ने प्राकारः.

चैत्रवद् गावौ मैत्रस्य.

तदर्हम् वतिः. विधिवत्पूज्यते.

तस्य भावस्त्वतलौ, गोत्वम्, गोता.

पृथ्वादिभ्य इमनिज्वा

रऋतो हलादेर्लघोः इष्ठेमेयस्सु

टेः, भस्य लोप इष्ठेमेयस्सु. प्रथिमा, म्रदिमा.

मार्दवम्, पार्थवम्. (अण्.)

वर्णदृढादिभ्यः ष्यञ्च, इमनिच्.

शौक्ल्यम्, शुक्लिमा, दार्ढ्यम्, द्रढिमा.

औचित्यम्.

(पृथुमृदुभृशकृशदृढपरिवृढाः)

649 गुणवचनब्राह्मणादिभ्यः कर्मणि च भावे.

जाड्यम्, मौढ्यम्, याथातथ्यम्, याथापुर्यम्.

दौत्यम्, वाणिज्यम्.

स्तेनाद्यन्नलोपश्च, स्तेयम्. कर्मणि भावे च.

सख्युर्यः सख्यम्. ,,

पत्यन्तपुरोहितादिभ्यो यक्. ,,

सैनापत्यम्, पौरोहित्यम्.

प्राणभृज्जाति - वयोवचनोद्गातृभ्योऽञ्.

औष्ट्रम्, आश्वम्, कौमारम्, कैशोरम्

सौष्ठवम्, दौष्ठवम्, औद्गात्रम्.

हायनान्त युवादिभ्योऽण्. द्वैहायनम्,

यौवनम्, स्थाविरम्.

इगन्ताच्च लघुपूर्वात्, शौचम्, मौनम्.

योपधाद् गुरूपोत्तमाद्वुञ्. रामणीयकम्,

आभिधानीयकम्.

चतुर्वर्णादीनां स्वार्थे, चातुर्वर्ण्यम्, सैन्यम्,

सान्निध्यम्, सामीप्यम्, औपम्यम्, त्रैलोक्यम्,

षाड्गुण्यम्, त्रैस्वर्यम्.

धान्यानां भवने क्षेत्रे खञ्. मौद्गीनम्.

659 तदस्य सञ्जातं तारकादिभ्य इतच्.

तारकितम् (नभः), कण्टकितम्.

प्रमाणे द्वयसज्दघ्नञ्मात्रचः, तदस्य.
ऊरुमात्रम्, ऊरुदघ्नम्, ऊरुद्वयसम्.
यत्तदेतेभ्यः परिमाणे वतुप्.
सङ्ख्याया अवयवे तयप्. पञ्चतयम्.
चतुष्टयम्, त्रितयम्, द्वितयम्.
द्वित्रिभ्यां तयस्यायज्वा. द्वयम्, त्रयम्.
उभादुदात्तो नित्यम्, अयच्. उभयम्.
तदस्मिन्नधिकमिति दशान्ताड्डः
भस्य टे लोपः. डिति. एकादशं शतं सहस्रं वा.
तस्य पूरणे डट्. एकादशः.
नान्तादसंख्यादेर्मट् डटः. पञ्चमः, सप्तमः,
नवमः, अष्टमः, दशमः.
षट् कतिपयचतुरां थुक्, डटि.
षष्ठः, कतिथः, कतिपयथः, चतुर्थः.
चतुरश्छयतावाद्यक्षरलोपश्च. तुरीयः, तुर्यः.
द्वेस्तीयः, तस्य पूरणे. द्वितीयः.
671 त्रेः सम्प्रसारणं च. तृतीयः.

विंशत्यादिभ्यस्तमडन्यतरस्याम्. डटः.

विंशतितमः, विंशः, त्रिंशः, त्रिंशत्तमः.

ति विंशतेर्डिति, लोपः.

सङ्ख्याया विधार्थे धा, चतुर्धा, पञ्चधा.

षष उत्वं दतृदशधासूत्तरपदादेः ष्टुत्वं च धासु वा.

षोढा, षड्धा, षोडश, षोडन्.

द्वित्र्योश्च धमुञ्. द्वैधम्, त्रैधम्.

द्विधा, त्रेधा.

एधाच् च. द्वेधा, त्रेधा.

सङ्ख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच्.

अभ्यावृत्तिर्जन्म. पञ्चकृत्वो भुङ्क्ते.

षट्कृत्वः. भूरि वारान् भुङ्क्ते.

द्वित्रिचतुर्भ्यः सुच्. द्विः, त्रिः, चतुः.

एकस्य सकृच्च, सुच्. सकृत्.

विभाषा बहोर्धाऽविप्रकृष्टकाले.

अविप्रकृष्ट आसन्नः.

बहुधा दिवसस्य भुङ्क्ते, बहुकृत्वः.

682 तदस्यास्त्यस्मिन्निति मतुप्. गोमान्.

मादुपधायाश्च मतोर्वोऽयवादिभ्यः

किंवान्, ज्ञानवान्, विद्यावान्, लक्ष्मीवान्, यशस्वान्, भास्वान्, यवमान्.

झयः, मतोर्वः. तड्वान्, विद्युत्वान्.

लोमादिपामादिपिच्छादिभ्यः शनेलचः.

लोमशः, अङ्गना, पामनः, पिच्छिलः.

अत इनिठनौ. दण्डी, दण्डिकः.

अस्मायामेधास्रजो विनिः, यशस्वी, मायावी, मेधावी, स्रग्वी, यशस्वान्.

अर्श आदिभ्योऽच्. अर्शसः, नीलः, मल्लः. लवणः, कृष्णः, श्वेतः.

अहंशुभमोर्युस्. अहंयुः, शुभंयुः.



अतिशायने तमबिष्ठनौ. लघुतमः, लघिष्ठः.
(अयमेषां लघुरतिशयेन.)

691 द्विवचनविभज्योपपदे तरबीयसुनौ लघुतरः, लघीयान्. (अयमनयोर्लघुरतिशयेन.)

अजादी गुणवचनादेव.

स्थूलदूरयुवह्रस्वक्षिप्रक्षुद्राणां यणादिपरं पूर्वस्य च

गुणः. लुप्यते इष्ठेमेयःसे.

स्थविष्ठः, दविष्ठः, यविष्ठः, ह्रसिष्ठः,

क्षेपिष्ठः, क्षोदिष्ठः, स्थवीयान्.

प्रियस्थिरस्फिरोरुबहुलगुरुवृद्धतृप्रदीर्घबृन्दारकाणां

प्रस्थस्फवर्बंहिगर्वर्षित्रप्द्राघिबृन्दाः.

इष्ठादिषु. प्रेष्ठः, स्थेष्ठः, स्फेष्ठः,

वरिष्ठः, बंहिष्ठः, गरिष्ठः, वर्षिष्ठः, त्रपिष्ठः,

द्राघिष्ठः, बृन्दिष्ठः, प्रेयान्, प्रेमा, गरिमा,

लघिमा.

बहोर्लोपो भू च बहोः, इष्ठेमेयसोः.

भूमा, भूयान्.

इष्ठस्य यिट् च. भूयिष्ठः.

युवाल्पयोः कनन्यतरस्याम्. इष्ठेयसोः.

कनिष्ठः, कनीयान्, यविष्ठः, अल्पिष्ठः.

698 ईषदसमाप्तौ कल्पब्देश्यदेशीयरः.

(ईषदूनो विद्वान्) विद्वत्कल्पः, यशस्कल्पम्.

विद्वद्देश्यः, विद्वद्देशीयः.

प्रकारवचने जातीयर्. पटुजातीयः.

प्रागिवात्कः.

अव्ययसर्वनाम्नामकच् प्राक्टेः.

उच्चकैः, सर्वके.

कुत्सिते. अश्वकः.

अनुकम्पायाम्. पुत्रकः.

नीतौ च तद्युक्तात्. तिङश्च. हन्त ते धानकाः, गुडकाः. पचतकि, जल्पतकि.

अल्पे, तैलकम्.

ह्रस्वे. वृक्षकः.

कुटीशमीशुण्डाभ्यो रः. ह्रस्वे. कुटीरः, शमीरः, शुण्डारः.

वत्सोक्षाश्वर्षभेभ्यश्च तनुत्वे, ष्टरच्. वत्सतरः, उक्षतरः, अश्वतरः, ऋषभतरः.

इवे प्रतिकृतौ. अश्वकः.

शाखादिभ्यो यः. शाख्यः, मुख्यः, जघन्यः, अग्र्यः. (मुखमिव)

711 तत्प्रकृतवचने मयट्. अन्नमयम्.

(प्राचुर्येण प्रस्तुतं प्रकृतम्) अपूपमयम्.

अनन्तावसथेतिहभेषजां ञ्यङ्.

अनन्त एवानन्त्यम्, आवसथ्यम्, ऐतिह्यम्, भैषज्यम्.

देवतान्तात्तादर्थ्ये यत्. तदर्थ एव तादर्थ्यम्. पितृदेवत्यम्.

पादार्घाभ्याञ्च, तादर्थ्ये यत्. पाद्यम्, अर्घ्यम्.

नवस्य नू आदेशः त्नप्तनप्खाश्च प्रत्ययाः. नूत्नम्, नूतनम्, नवीनम्.

नश्च पुराणे प्रात्. प्रणम्, प्रत्नम्, प्रतनम्, प्रीणम्.

भागरूपनामभ्यो धेयः. भागधेयम्, रूपधेयम्, नामधेयम्.

देवात्तल्. देवता.

वर्णे चानित्ये, कः. लोहितकः कोपेन. कालकं मुखं वैलक्ष्येण.

720 बह्वल्पार्थाच्छस् कारकादन्यतरस्याम्.

बहुशः, अल्पशः. बहूनि ददाति)

सङ्ख्यैकवचनाच्च वीप्सायाम्.

द्वौ द्वौ ददाति, द्विशः, माषशः.

(प्रति योगे) पञ्चम्यास्तसिः कृष्णतः प्रति.

प्रद्युम्नः, आदितः, अन्ततः.

कृभ्वस्तियोगे सम्पद्यकर्तरि च्विः.

अस्य च्वौ, ईत्. कृष्णीकरोति.

च्वौ च, पूर्वस्य दीर्घोऽणः. शूचीभवति.

विभाषा साति कार्त्स्न्यें. अग्निसात्.

सात्पदाद्योः, न षः.

तदधीनवचने, सातिः कृभ्वस्तिसम्पदा योगे.

राजसात्करोति

देये त्रा च, तदधीने. सातिश्च.

मित्रत्रा करोति, सम्पद्यते, भवति.

अव्यक्तानुकरणाद्‌व्यजवरार्धादनितौ डाच्.

कृभ्वस्तियोगे. पटपटाकरोति, भवति.

731 कृञो द्वितीयतृतीयशम्बबीजात्कृषौ डाच्.

द्वितीया करोति, शम्ब प्रतिलोमे.

द्वितीयं कर्षणं करोति, बीजेन सह कर्षति,

बीजाकरोति.

समयाच्च यापनायाम्, डाच्. समयाकरोति.

निष्कुलान्निष्कोषणे, डाच्.

निष्कुलाकरोति दाडिमम्.

सुखप्रियादानुलोम्ये, डाच्. सुखाकरोति.

प्रियाकरोति स्वामिनं सेवकः.

गुरुं वा शिष्यः, पतिं वा पत्नी.

दुःखात्प्रातिलोम्ये, डाच्. दुःखाकरोति.

मद्रभद्राभ्यां परिवापणे, डाच्.

परिवापणं मुण्डनम्. मद्राकरोति, भद्राकरोति.



— जुहोतु —

हुझल्भ्यो हेर्धिः. जुहुधि.

सिचि वृद्धिः परस्मैपदेषु. अहौषीत्.

सिजभ्यस्तविदिभ्यश्च, ङितो झेर्जुस्.

अहौषुः, होष्यति, होता, जुहाव.

740 अचस्तास्वत्थल्यनिटो नित्यम्.

उपदेशे, नेट् थलः.

उपदेशेऽत्वतः, तास्वत्थल्यनिटो नित्यं नेट् थलः.

ऋतो भारद्वाजस्य, तास्वत्थल्यनिटो नित्यं नेट् थलः. जुहविथ, जुहोथ.

कृसृभृवृस्तुद्रुस्रुश्रुवो लिटि, नेट्. जुहुविव, जुहुविम.

भीह्रीभृहुवां श्लुवच्च, आम् च लिटि वा. जुहवाञ्चकार, आस, बभूव. बिभेति.

भियोऽन्यतरस्याम् इत् क्ङिति हलि सार्वधातुके. बिभितः, बिभीतः. बिभ्यति, बिभेतु, बिभिहि, बिभीहि, बिभयानि, अभैषीत्, अभैष्टाम्, भेष्यति, जिह्रेति, अह्रैषीत्, ह्रेष्यति.

भृञामित्, इदभ्यासस्य श्लौ. बिभर्ति, बिभृहि, बिभृते, बिभृष्व, बिभरै.

रिङ् शयग्लिङ्क्षु, ऋतः. (यादावार्धधातुके लिङि.) ध्रियात्. (क्रिया, क्रियते.)

748 उश्च, झलिङ्सिचावात्मनेपदेषु. कित्. भृषीष्ट.

ह्रस्वादङ्गात्, (सिचो लुक्) झलि सस्य लोपः.

अभूत, अभूषाताम्, अभार्षीत्, अभाष्टम्.

जहाति.

जहातेश्च. इद्वा हलि क्ङिति सार्वधातुके.

जहितः, जहीतः, जहति, जहातु.

आ च हौ, जहातेरिदीतौ च.

जहाहि, जहिहि, जहीहि, जहानि.

लोपो यि, जहातेराकारस्य सार्वधातुके.

जह्यात्, जह्याताम्.

एर्लिङि, घुमास्थागापाजहातिसां आर्धधातुके किति. हेयात्, हेयास्ताम्.

यमरमनमातां सक्च. सिच इट् परस्मैपदेषु.

अहासीत्, सिष्टाम्, हास्यति, हाता.

आत औ णलः, धातोः. जहौ.

756 आतो लोप इटि च, आर्धधातुके अचि क्ङिति.

जहतुः, जहुः, जहिथ, जहाथ,

जहिव, जहिम.

ददाति, दत्तः, ददति, दत्ते.

ददातु – दत्तात्, दत्ताम्, ददतु.

दाधाघ्वदाप्

घ्वसोरेत् हावभ्यासलोपश्च.

देहि – दत्तात् ददानि, अदात्.

आतः, धातोः परस्य झेर्जुस्. अदुः.

स्थाघ्वोरिच्च तङि सिचकित्.

झलो झलि, सस्य लोपः.

अदित, अदिषाताम्. दास्यति, दाता.

दद्यात्, देयात्, अददात्, दधाति.

दधस्तथोश्च, एकाचो बशो भष् झषन्तस्य स्ध्वोः

(पदान्ते च.) धत्तः, दधति, धत्ते.

धेहि, दध्यात्, अधित, धास्यति,

धाता.

अत्तु, अद्धि, अदानि.

अदः सर्वेषाम्, अपृक्तस्य सार्वधातुकस्य.

आदत्, अद्यात् अद्यास्ताम्.

लुङ्सनोर्घस्लृ, अदः परयोः.

पुषादिद्युताद्यॢदितः परस्मैपदेषु अङ् च्लेः.

अघसत्, अत्स्यति, अत्ता, शास्ति.

766 शास इदङ्हलोः, उपधायाः ङिदति.

शासिवसिघसीनां च. इण्कोः परस्य सस्य अपदान्तस्य मूर्धन्यः. शिष्टः.

जक्षित्यादयः षट्. अभ्यस्तम्. शासति,

शास्सि, शास्तु, शिष्टात्.

शा हौ, शासः. (असिद्धवदत्राभात्.)

शाधि, शासानि.

तिप्यनस्तेः, पदान्तस्य सस्य दः.

वा पदान्तस्य, झलां चरो वा.

अशाद्, अशात्.

सिपि धातोरुर्वा. पदान्तस्य सस्य.

अशाः, शिष्यात्, शिष्यास्ताम्.

सर्तिशास्त्यर्तिभ्यश्च. अङ् च्लेः कर्तरि परस्मैपदे.

अशिषत्, शासिष्यति.

हन्ति, हंसि, हन्मि.

हन्तेर्जः, हौ. जहि, हनानि, अहन्, हन्यात्.

हनो वध लिङि, आर्धधातुके.

अतो लोपः, आर्धधातुकोपदेशे. वध्यात्.

लुङि च हनो वधः.

अस्तिसिचो ऽपृक्ते, हल ईट्.

इट ईटि, सलोपः. अवधीत्, घिष्टाम्.

ऋद्धनोः स्ये, इट्. हनिष्यति, हन्ता.

जघान, जघ्नतुः, जघ्नुः.

अभ्यासाच्च, हो हन्तेः कुः. जघनिथ,

जघन्थ, द्वेष्टि, द्विष्टः.

षढोः कः सि द्वेक्षि, द्विक्षे, द्विड्ढि

शल इगुपधादनिटः क्सः, च्लेर्लुङि.

अद्विक्षत्, अद्विक्षताम्.

क्सस्याचि, तङि लोपः. अद्विक्षाताम्.

द्वेक्ष्यति, द्वेष्टा, दिद्वेष.

783 दादेर्धातोर्घः, हस्य झलि पदान्ते च.

दोग्धि, दुग्धः, दुहन्ति.

एकाचो बशो भष् झषन्तस्य स्ध्वोः पदान्ते च.

घोक्षि, दोह्मि, दुग्धे.

दोग्धु, दुग्धि, दोहानि, धुक्ष्व, अधोक्.

धोक्ष्यति, धाक्ष्यते.

लुग्वा दुह दिह लिह गुहां आत्मनेपदे दन्त्ये.

क्सस्य. अधोक्, अदुग्ध, अधुक्षत्,

अधुक्षत, दोग्धा, दुदुहे, दुदोह. दोग्धि,

दिग्धे.

आस्ताम्, आस्व, आसिष्ट, आसिष्यते.

दयायासश्च, आम् लिटि. आसाञ्चक्रे.

शीङः सार्वधातुके गुणः शेते, शयाते.

शीङो रुट्. झस्यातः. शेरते, शेष्व.

शयिष्यते, शयिता, अशयिष्ट, शिश्ये.

उतो वृद्धिर्लुकि हलि, पिति सार्वधातुके

नाभ्यस्तस्य. यौति, युतः, युहि, यवानि,

अयौत्, यूयात्.

तुरुस्तुशम्यमः सार्वधातुके, ईड् वा हलि तिङि.

रवीति, रौति, रुवीतः, अरावीत्,

रविष्यति, रुराव.

स्तौति, स्तुहि, स्तुयात्.

स्तुसुधूञ्भ्यः परस्मैपदेषु, सिच इट्.

अस्तावीत् स्तोष्यति, स्तोता.

ब्रुवः पञ्चानां आदित आहो ब्रुवः.

लटो वा णलतुसुस्थलथुसः परस्मैपदानाम्.

आह आहतुः आहुः.

803 आहस्थः, झलि. आत्थ, आहथुः.

ब्रुवः ईट्. हलि पिति. ब्रवीति, ब्रूते,
ब्रूहि, ब्रवाणि, ब्रूयात्.

ब्रुवो वचिः, आर्धधातुके. (अवच्, अत्.)

वच उम्. अङि. अवोचत्, त, वक्ष्यति.

वचि स्वपियजादीनां किति. सम्प्रसारणम्.
उच्यात्, उच्यास्ताम्, (उक्तिः, अक्तम्.)

लिट्यभ्यासस्योभयेषाम्. वच्यादीनां
ग्रह्यादीनां च किति ङिति.
उवाच, ऊचतुः. एति, इतः.

इणो यण्. अचि प्रत्यये. यन्ति. एमि,
एमि. इहि, अयानि, ऐत्, इयात्.

इणो गा लुङि, अगात्, एष्यति, एता.

दीर्घ इणः किति, अभ्यासस्य लिटि. ईयतुः.
अधीते, अधीष्व, अध्यैए.

विभाषा लुङ्लृङोः, गाङ् इङः.

गाङ्कुटादिभ्यो ऽञ्णिन ङित्.

814 घुमास्थागापाजहातिसां हलि, आत ईत्
आर्धधातुके किङति हलि. अध्यगीए.

गाङ् लिटि, इङः. अधिजगे, याति.

यमरमनमातां सक्च, (धातोः) इट् च.

अयासीत्, अयासिष्टाम्, यास्यति, याता,

ययौ. वेत्ति, वित्तः, विदन्ति, वेत्सि,

वेद्मि.

विदो लटो वा, णलादयः. वेद, विदतुः.

वेत्थ, विद्धि, विद्यात्.

विदाङ्कुर्वन्त्वित्यन्यतरस्याम्, लोटि विदः.

विदांकरोतु.

अत उत्सार्वधातुके, उतः कृञः क्ङिति.

(उप्रत्ययान्तस्य.) विदाङ्कुरुतात्, कुरुताम्.

उतश्च प्रत्ययादसंयोगपूर्वात्, हेर्लुक्.

विदांकुरु, विदांकरवाणि, अवेदीत्,

वेदिष्यति, वेदिता, विवेद.

अस्ति, स्तः, एधि, असानि. आसीत्,

स्यात् स्याताम्, स्युः.

अस्तेर्भूः, आर्धधातुके. अभूत्, भूयात्.

822 मृजेर्वृद्धिः, इकः. (धातुप्रत्यये.)

मार्ष्टि, मृष्टः.

अचि क्ङिति वा, मृजेर्वृद्धिः.

मार्जन्ति, मृजन्ति, मृड्ढि.

अमार्जीत्, अमार्जिष्टाम्, अमृजीत्.

स्वरति सूति सूयतिधूञूदितो वा, इट्.

वदव्रजहलन्तस्याचः, वृद्धिः सिचि परस्मैपदेषु.

अमार्क्षीत्, अमार्ष्टाम्, मार्जिष्यति,

मार्क्ष्यति, ममार्ज.

रुदादिभ्यः सार्वधातुके, इड्वलादेः.

रोदिति, रुदितः, रुदिहि, रोदानि.

रुदश्च पञ्चभ्यः, हलि पिति सार्वधातुके अपृक्ते

ईट्. अरोदीत्, अरुदिताम्.

अड् गार्ग्यगालवयोः. अरोदत्, रुद्यात्.

इरितो वा, च्लेरङ्कर्तरि परस्मैपदेषु.

अरुदत्, अरोदीत्, रोदिष्यति.

830 नेटि, सिचि हलन्तस्य वृद्धिः.

स्वपिति, स्वपिहि, स्वप्यात्, सुप्यात्,

अस्वाप्सीत्, स्वप्स्यति, सुष्वाप,

श्वसिति, अश्वसीत्, श्वसिष्यति.

अतो हलादेर्लघोः, इटि सिचि वा वृद्धिः परस्मैपदेषु. (अजागरीत्.)

हम्यन्त क्षण श्वस जागृ णि श्व्येदिताम्.

अजागरीत्, जागर्ति, जागृतः.

(ऋद्धनोः स्ये.) जागरिष्यति, जागर्ता.

अजागः, अजागृताम्.

जुसि च, इको गुणः. अजागरुः.

जागर्यात्, जजागार.

जाग्रोऽविचिण्णल्ङित्सु. गुणः.

जजागरतुः, जजागरिथ. करोति, कुरुतः.

नित्यं करोतेः, उतः प्रत्ययस्य लोपो म्वोः.

कुर्वः, कुर्मः, कुर्वहे, कुर्महे. करोतु.

उतश्च प्रत्ययादसंयोगपूर्वात्. हेर्लुक्.

कुरु, कुरुष्व, अकरोत्, अकुरुत.

837 ये च, करोतेरुतो लोपो नित्यम्.

कुर्यात्, कुर्वीत, क्रियात्, कृषीष्ट,

अकार्षीत्, अकृत, करिष्यति, कर्ता,

चकार, चक्रे.

सुट्कात्पूर्वः, अड्भ्यासव्यवायेऽपि.
सञ्चस्कार.

सम्परिभ्यां करोतौ भूषणे, सुट्.

समवाये च, सुट् सम्परिभ्यां करोतेः.
संस्करोति, परिष्करोति.

उपात्प्रतियत्नवैकृतवाक्याध्याहारेषु च.
करोतेः. (भूषणे समवाये च.)
उपस्कृता कन्या, उपस्कृता जनाः.
एधोदकस्योपस्कुरुते.
उपस्कृतं भुङ्क्ते, उपस्कृतं ब्रूते.

लोपश्चास्यान्यतरस्यां म्वोः. उतश्च
प्रत्ययादसंयोगपूर्वात्. तन्वः, तनुवः,
तन्मः, तनुमः, तनुहे, तनु,
अतनीत्, अतानीत्.

843 तनादिभ्यस्तथासोः. सिचो वा लुक्.
अतत, अतानिष्ट, अतनिषाताम्, अतथाः,
अतनिष्ठाः, तनिष्यति, तानिता, ततान,
तेने.
क्रीणीहि, क्रीणानि, क्रीणीयात्,

क्रीणीत, क्रीयात्, क्रेषीष्ट, अक्रैषीत्,
अक्रेष्ट, क्रेष्यति.
बध्नाति, बध्नातु, बध्नीतात्.

हलः श्नः शानज्झौ, बधान, बध्नानि,
बध्यात्, भन्त्स्यति, अभान्त्सीत्,
बन्द्धा, बबन्ध, बबन्धतुः.

ज्ञाजनोर्जा, शिति. जानाति, जानीहि.

वान्यस्य संयोगादेः, आत ऐर्लिङि.
ज्ञायात्, ज्ञेयात्, अज्ञासीत्.
ज्ञास्यति, ज्ञाता, जज्ञौ.

ग्रहि ज्या वयि व्यधि वष्टि विचति वृश्चति पृच्छति-
भृज्जतीनां ङिति च. किति सम्प्रसारणम्.
गृह्णाति, गृह्णीतः, गृहाण,
गृह्यात्, अग्रहीत्.

ग्रहो ऽलिटि दीर्घः इटः. अग्रहीष्टाम्,
ग्रहीष्यति, ग्रहीता, जग्राह.

849 प्वादीनां ह्रस्वः. पुनाति, लुनाति.
रुणद्धि, रुणधानि, अरुणत्, अरुधत्,
अरौत्सीत्, अरुद्ध, रोत्स्यति, रोद्धा, रुरोध.

भिनत्तु, भिन्द्धि, अभिदत्, अभैत्सीत्, अभित्त, भेत्स्यति.

इन्धे, ऐन्धिष्ट, इन्धिष्यते.

अनक्ति, अङ्क्तः अञ्जन्ति.

अञ्जिष्यति, अङ्क्ष्यति.

अञ्जेः सिचि, इट्. आञ्जीत्, आनञ्ज.

सुनु, सूयात्, असावीत्, सोष्यति.

सोपीष्ट, असोष्ट. आप्नुहि, आपत्, आप्स्यति. शक्नोतु, शक्नुहि, अशकत्. शक्ष्यति. स्पर्धते, स्पर्धस्व, अस्पर्धिष्ट, स्पर्धिष्यते.

शर्पूर्वाः खयः, शेषा अभ्यासस्य. पस्पर्धे.

इदितो नुम् धातोः.

वन्दते, वन्दिष्यते, अवन्दिष्ट.

यतस्व, यतिष्यते, अयतिष्ट.

अत एकहल्मध्येऽनादेशादेर्लिटि, अङ्गस्य एदभ्यासलोपश्च क्विति. येते.

थलि च सेटि, तथा. नेदिथ.

855 अत आदेः, अभ्यासस्य दीर्घः. (आ.अंके)

तस्मान्नुड् द्विहलः. धातोः आनङ्क्.

वाञ्छति, वाञ्छिष्यति, अवाञ्छीत्.

उपधायां च, इर्वोर्धात्वोर् इको दीर्घः हलि.

मूर्च्छति, मूर्च्छिष्यति, अमूर्च्छीत्.

त्रपते, त्रपिष्यते, अत्रपिष्ट.

तॄ फल भज त्रपश्च, अत एदभ्यासलोपश्च किति लिटि सेटि थलि च. त्रेपे.

गुपू धूप विच्छि पणि पनिभ्य आयः.

गोपायति, अगोपायीत्, गोपायिष्यति.

आयादय आर्धधातुके वा.

गोपिष्यति, गोप्स्यति, अगोपीत्, अगौप्सीत्, जुगोप, जुगुपतुः.

कास्प्रत्ययादाममन्त्रे लिटि. (अनेकाचः)

गोपायाञ्चकार, बभूव, आस.

कमेर्णिङ्. कामयते, कामयिष्यते, कमिष्यते.

णिश्रिद्रुस्रुभ्यः कर्तरि चङ्. च्लेर्लुङि.

णेरनिटि. लोप आर्धधातुके.

865 णौ चङ्युपधाया ह्रस्वः, अङ्गस्य. (कम् अत.)

चङि. एकाचो द्वे प्रथमस्य. (कम् कम् अतः अजादे र्द्वितीयस्य धातोरनभ्यासस्य.

सन्वल्लघुनि चङ्परेऽनग्लोपे. अभ्यासस्य सन्वल्लघुनि परे चङ्परे णौ परे.

( चङ्परे णौ अङ्गस्याभ्यासस्य सन्वल्लघुनिपरेऽङ्गस्य चङ्परे णौ परे.

चङ्परेणौ अङ्गस्याभ्यासस्य सन्वल्लघुनिपरे. )

दीर्घो लघोः, अभ्यासस्य पूर्वविषये.

अचीकमत.

कमेश्च्लेश्चङ्. अचकमत.

अतो ल्रान्तस्य, अतो वृद्धिः सिचि परस्मैपदेषु.

अफालीत्, अस्खालीत्.

सन्लिटोर्जेः, अभ्यासस्य कुः.

जिगाय, जिग्यतुः.

द्युद्भ्यो लुङि, परस्मैपदं वा.

अद्युतत्, अद्योतिष्ट.

वृद्भ्यः स्यसनोः, परस्मैपदं वा.

न वृद्भ्यश्चतुर्भ्यः, इट् सादेरार्धधातुकस्य परस्मैपदेषु. वर्त्स्यति, वर्तिष्यते, अवृतत्, अवर्तिष्ट, वर्त्स्यति, वर्धिष्यते, अवृधत्, अवर्धिष्ट. स्यन्त्स्यति, स्यन्दिष्यते, अस्यदत्, अस्यन्दिष्ट, अस्यन्त.

कृपो रो लः. कल्पते.

लुटि च क्लृपः. स्यसनोः परस्मैपदं वा.

तासि च क्लृपः. नेट् सादेरार्धधातुकस्य परस्मैपदेषु. कल्प्स्यति, कल्पिष्यते. अकॢपत्, अक्लृप्त, अकल्पिष्ट.

883 फणां च सप्तानाम्, अच एत्वमभ्यासलोपश्च किति लिटि सेटि थलि च. रेजतुः.

पतः पुम्, अङि. अपप्तत्.

वा जॄ भ्रमुत्रसाम्, एदभ्यासलोपश्च किति लिटि थलि च सेटि. भ्रेमतुः, बभ्रमतुः.

तीष सह लुभ रुष रिषः, वेडार्धधातुकस्य सहिता.

सहिवहोरोदवर्णस्य, ढलोपे. सोढा.

पा घ्रा ध्मा स्था म्ना दाण् दृश्यर्ति सर्ति शद सदां पिब जिघ्र धम तिष्ठ मन पश्यर्च्छधौशीयसीदाः शिति. सीदति.

ऊदुपधाया गोहः, अचि प्रत्यये. गूहति. गूहिष्यति, अगूहीत्, घोक्ष्यति, अघुक्षत्, अगूढ.

आदेच उपदेशेऽशिति, धातोः. धास्यति.

विभाषा धेट् श्व्योः क्लेश्चङ्कर्तरि लुङि. अदधत्, अधासीत्.

विभाषा घ्राधेट् शाच्छासः सिचो लुक् परस्मैपदे. अधात्.

892 ऋतश्च संयोगादेर्गुणः, लिटि. सस्मरतुः.

गुणोर्तिसंयोगाद्योः, ऋतश्च यग् लिङोः.

सर्यात्.

सर्तेर्वेगितायां गतौ धावादेशः धावति.

श्रुवः शृ च, श्नुः कर्तरि सार्वधातुके.

शृणोति.

द्यतेर्दिगि लिटि, दिग्ये. (न द्वे.)

ॠत इद्धातोः, तीर्यात्.

वृतो वा, अलिटि दीर्घः. तरीष्यति, तरिष्यति.

(वृङ् वृञ् ॠ.)

गुप्तिज्किद्भ्यः सन्.

गुपेर्निन्दायाम्. जुगुप्सते.

तिजेः क्षमायाम्. तितिक्षते.

कितेर्व्याधिप्रतीकारे निग्रहेऽपनयने नाशने

संशये च. चिकित्सति.

मान्बधदान्शान्भ्यो दीर्घश्चाभ्यासस्य, सन्.

मानेर्जिज्ञासायाम्, मीमांसते.

905 बधेश्चित्तविकारे, बीभत्सते.

दानेरार्जवे. दीदांसते.

शानेर्निशाने, शीशांसते.

इषुगमियमां छः, शिति. गच्छति, गन्ता.

गमेरिट् परस्मैपदेषु, से. गमिष्यति.

अनुदात्तस्य चर्दुपधस्यान्यतरस्यां झल्यमकि

स्रप्स्यति, सर्प्स्यति, स्रप्ता, सर्प्ता.

सृजिदृशोर्झल्यमकिति. द्रक्ष्यति, द्रष्टा.

ऋदृशोऽङि गुणः. अदर्शत्.

न दृशः, च्लेः क्सो न. अद्राक्षीत्.

दंशसञ्जस्वञ्जां शपि, न लोपः. दशति.

स्पृशमृशकृषतृपदृपां च्लेः सिज्वा.

अकृक्षत्, अक्राक्षीत्, अकार्क्षीत्.

सः स्यार्धधातुके, तः. वत्स्यति, अवात्सीत्.

वेञो वयिः, लिटि. उवाय.

लिटि वयो यः, ऊयतुः.

वश्चान्यतरस्यां किति, वयो यः लिटि. ऊवतुः.

920 वेञः, न सम्प्रसारणं लिटि. ववौ, ववे.

न व्यो लिटि, आत्वं न. विव्याय, विव्ये.

लिपिसिचिह्वश्च, च्लेरङ्. अह्वत्.

आत्मनेपदेष्वन्यतरस्याम्. च्लेरङ्. अह्वत.

अभ्यस्तस्य च, ह्वेञः सम्प्रसारणम्. जुहाव.

देविष्यति, अदेवीत्.

सेऽसिचि कृतचृतच्छृदतृदनृतः, वेडार्धधातुकस्य.

नर्त्स्यति, नर्तिष्यति.

विभाषा लीयतेः, आ अशिति ल्यपि च.

लास्यते, लेष्यते, अलैषीत्, अलासीत्.

ओतः श्यनि, लोपः. श्यति, स्यति, द्यति.

दीप जन बुध पूरि तायिप्यायिभ्योऽन्यतरस्याम्.

ते चिण् वा च्लेः.

चिणो लुक्. अजनि.

जनिवध्योश्च, न वृद्धिर्ञ्णिति कृति च.

न हो धः. हस्य. झलि पदान्ते च.

नत्स्यति, अनात्सीत्.

932 चिण् ते पदः, च्लेः. अपादि.

विद्यते, वेत्स्यते, अवित्त.

श्लिष आलिंगने, श्लेः क्सः. अश्लिक्षत् कन्याम्.
अश्लिषज्जतु काष्ठम्.

रधादिभ्यश्च, झलि वेट्. नशिष्यति.

मस्जिनशोर्झलि, नुम्. नङ्क्ष्यति.

शमामष्टानां दीर्घः श्यनि. शाम्यति.

अस्यतेस्थुक्, अङि. आस्थत्.

भ्रस्जो रोपधयो रमन्यतरस्याम्, आर्धधातुके.
भ्रक्ष्यति, ते. भर्क्ष्यति, ते. अभ्राक्षीत्,
अभार्क्षीत्, अभर्ष्ट, अभ्रष्ट.

विज इट्, प्रत्ययश्च कित्. उद्विजते.

म्रियतेर्लुङ्लिङोश्च, शिति चात्मनेपदम्.
मरिष्यति, मर्ता, ममार, म्रियते, अमृत,
मृषीष्ट.

अचि विभाषा, गिरते रो लः. गिलति, गिरति,
गरिष्यति, अगालीत्.

942 शे मुचादीनाम्, नुम्. मुञ्चति, ते.
चोरयति, ते. चोरयिष्यति, ते. अचूचुरत्, त.

भ्राजभासभाषदीपजीवमीलपीडामन्यतरस्याम्
णौ चङ्युपधाया ह्रस्वः. अपिपीडत्, अपीपिडत्.
उपधायाश्च, ऋत इद्धातोः. कीर्तयति.
उर् ऋत्, णौ चङ्युपधायाः. वा.
अचिकीर्तत्, अचीकृतत्. अचकथत्.
नाग्लोपिशास्वृदिताम्, णौ चङ्युपधायाया ह्रस्वः.
अशिशीलत्, अशशासत्.
ई च गणः, अभ्यासस्य णौ.
अजीगणत्, अजगणत्.
हनस्तो ऽचिण्णलोः, ञ्णिति.
कंसं घातयति, कंसमजीघतत्.



— णिचि विशेषाः —

अर्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुङ्णौ.
अर्पयति, दापयति, ह्रेपयति, आर्पिपत्,
अदीदपत्, अजिह्रेपत्.
950 तिष्ठतेरित्, णौ चङ्युपधायाः.
अतिष्ठिपत्, स्थापयति.

जिघ्रते र्वा, इत् णौ चङ्युपधायाः.

अजिघ्रिपत्, अजिघ्रपत्, घ्रापयति.

शाच्छासाह्वाव्यावेपां युक्. णौ.

पाययति, शाययति, साययति.

लोपः पिबतेरीच्चाभ्यासस्य, णौ चङ्युपधायाः.

अपीपयत्, अशीशयत्.

ह्वः सम्प्रसारणम्, णौ च संश्च ङोः.

अजूहवत्, अजुह्वावत्. (काण्यादीनां वा.)

स्वापे श्चङि, सम्प्रसारणम्, असूषुपत्.

क्रीङ्जीनां णौ, आदे चः.

क्रापयति, अध्यापयति, जापयति.

भियो हेतुभये, पुक्.

भीस्म्योर्हेतुभये, णावात्मनेपदम्

भीषयते, भाययति.

बिभेतेर्हेतुभये, पच आत् णौ. भापयते.

नित्यं स्मयतेः, णौ हेतुभये पच आत्.

विस्मापयते.

णौ गमिरबोधने, इण॰. गमयति, अजीगमत्,

प्रत्याययति, प्रत्यायीयत्.

दोषो णौ, ऊदुपधायाः.

दूषयति, अदूदुषत्.

शदेरगतौ तः, णौ. शातयति, अशीशतत्.

शादयति.

रुहः पोऽन्यतरस्याम् रोपयति, रोहयति,

अरूरुपत्, अरूरुहत्.

रभेरशब्लिटोः, नुमचि अररम्भत्

लभेश्च, अललम्भत्, लम्भयति, रम्भयति.

971 अत् स्मृदृत्वरप्रथम्रदस्तृस्पशाम्

अभ्यासस्य णौ चङि. असस्मरत्

णौ च संश्वङोः, इङो गाङ् वा.

अध्यजीगपत्, अध्यापिपत्,
अधिजिगीषति, अधीषिषति.

ओः पुयण्ज्यपरे, अभ्यासस्येत्.

सन्यङ्गस्य, अबीभवत्, अपीपवत्,
अमीमवत्, अयीयवत्, अरीरवत्,
अलीलवत्, अजीजवत्.

---

— सनि विशेषाः —

विभावयिषति, पिपावयिषति, मिमावयिषति,
यियावयिषति, रिरावयिषति, लिलावयिषति,
जिजावयिषति.

पूर्ववत्सनः, आत्मनेपदम्. एदिधिषते.

रुद् विद् मुष ग्रहि स्वपि प्रच्छः संश्च.

क्त्वा च कितौ. रुरुदिषति, विविदिषति.
मुमुषिषति.

976 सनि ग्रहगुहोश्च, उको नेट्. जिघृक्षति.

किरश्च पञ्चभ्यः, सन इट्.

पिपृच्छिषति, चिकरिषति, जिगरिषति,

दिधरिषते, दिदरिषते.

इको झल्, सन् कित्. (इगन्तात् झलादि.)

बुभूषति.

हलन्ताच्च, इकः परो झल् कित्.

जुघुक्षति, बिभित्सति.

अज्झनगमां सनि, झल् दीर्घः. (अचो गमिः.)

जिगीषति, जिघांसति, जिगांस्यते. (कर्मणि)

सनि च. इणो गमिरबोधने.

जिगमिषति, प्रतीषिषति.

इङश्च, गमिः सनि. अधिजिगांसते.

रलो व्युपधाद्हलादेः संश्च. क्त्वा च वा कितौ

सेटौ धातोः. दिद्युतिषते, दिद्योतिषते.

रुरुचिषते, लिलिखिषति.

सनि मी मा घु रभ लभशकपतपदामच इस्. सि.

आप्ज्ञप्यृधामीत्, अचः इ सनि.

986 दम्भ इच्च, अच ईरिस सनि.

मुचोऽकर्मकस्य गुणो वा.

अत्र लोपोऽभ्यासस्य, मोक्षते मुमुक्षते वा

वत्सः स्वयमेव. मुमुक्षति वत्सं कृष्णः.

दिदम्भिषति, ईप्सति, ज्ञीप्सति.

जिज्ञपयिषति, जिज्ञापयिषति.

सनीवन्तर्धभ्रस्जदम्भुश्रिस्वृयूर्णुभरज्ञपिसनाम्.

इट् वा.

छ्वोः शूडनुनासिके च, सम्प्रसारणम्.

दुद्यूषति, दिदेविषति, सुस्यूषति, सिसेविषति, ईर्त्सति, अर्दिधिषति, बिभ्रक्षति, बिभर्क्षति. बिभ्रज्जिषति, बिभर्जिषति, शिश्रीषति, शिश्रयिषति.

उदोष्ठ्यपूर्वस्य, उः. सुस्वूर्षति, सिस्वरिषति. युयूषति, युयविषति. बुभूर्षति, बिभरिषति.

तनिपतिदरिद्रातिभ्यः सनो वेट्.

तनोतेर्विभाषा, उपधाया दीर्घः सनि झलि.

तितांसति, तितंसति, तितनिषति.

994 आशंकायां सन्. श्वा मुमूर्षति, कूलं पिपतिषति, पित्सति, दिदरिद्रिषति, दिदरिद्रासति,

मित्सति, ते. दित्सति, ते. धित्सति, ते.
रिप्सते, लिप्सते, शिक्षति, ते. पित्सते.

स्मिपूङ्रञ्ज्वशां सनि, इट्.
सिस्मयिषते, पिपविषते, अरिरिषति,
अञ्जिजिषति, अशिशिषते.

इट् सनि वा, वृङ्वृञ् ऋदन्तानाम्.
तितरिषति, तितीर्षति. विवरिषति.
बुवूर्षति, ते. बुभूर्षति.

धातोर्हलादेः क्रियासमभिहारे यङ्

गुणो यङ्लुकोः, अभ्यासस्येकः.
बोभूयते, सोसूयते, सोसूत्र्यते.

दीर्घोऽकितः, अभ्यासस्य यङ् यङ् लुकोः.

नित्यं कौटिल्ये गतौ, यङ् धातोः, न क्रिया-
समभिहारे. वाव्रज्यते. (कुटिलं व्रजति.)

लुपसदचरजपजभदहदशगृभ्यो भावगर्हायाम्.
यङ्. लोलुप्यते.

1003 नुगतोऽनुनासिकान्तस्य, अभ्यासस्य नुक्.
पंपन्यते.

जपजभदहदशभञ्जपशां च, नगभ्यासस्य.

जञ्जप्यते.

रीगृदुपधस्य च, नरीनृत्यते, वरीवृत्यते.

नीग्वञ्चुस्रंसुध्वंसुभ्रंसुकसपतपदस्कन्दाम्.

पनीपत्यते.

ई घ्राध्मोः. जेघ्रीयते, देध्मीयते.

अयङ्यि क्ङिति, शीङः. शाशय्यते.

स्वपिस्यमिव्येञां यङि, सम्प्रसारणम्.

सोषुप्यते.

ग्रो यङि, रो लः. जेगिल्यते.

यङो ऽचि च, अन्यत्र च लुक्.

यङो वा, ईट् हलि पिति सार्वधातुके.

बोभवीति, बोभोति, बोभूतः,

बोभुवति, पास्पर्धीति, पास्पर्द्धि.

रुग्रिकौ च लुकि, ऋदुपधस्याभ्यासस्य रीक् च.

वर्वर्ति, वरिवर्ति, वरीवर्ति, वर्वृतीति.

1013 ऋतश्च, रुग्रिरीक् च. चर्कर्ति, चरिकर्ति.

चरीकर्ति, चर्करीति.

कर्तरि कर्मव्यतिहारे, आत्मनेपदम्.

(क्रियाविनिमये.) व्यतिलुनीते.

नेर्विशः, आत्मनेपदम्. निविशते.

विपराभ्यां जेः. विजयते, पराजयते.

आङो दोऽनास्यविहरणे, विद्यामादत्ते,
मुखं व्याददाति, नदीकूलं, विपादिकां च.

अपाच्चतुष्पाच्छकुनिष्वालेखने, सुट् च
अपस्किरते वृषो हृष्टः, कुक्कुटो भिक्षार्थी.
श्वा आश्रयार्थी च.

समवप्रविभ्यः स्थः, संतिष्ठते, अवतिष्ठते,
प्रतिष्ठते, वितिष्ठते.

आङः प्रतिज्ञायाम्. स्थः. शब्दं नित्यमातिष्ठते.

प्रकाशनस्थेयाख्ययोश्च, गोपी कृष्णाय तिष्ठते,
न्यायाधिपतिं तिष्ठते.

उदोनूर्ध्वकर्मणि. मुक्तावुत्तिष्ठते धने वा.
पीठादुत्तिष्ठति, शतमुत्तिष्ठति ग्रामात्.

1023 उपाद्देवपूजासंगतिकरणमित्रकरण-
पथिषु. आदित्यमुपतिष्ठते, ऐन्द्र्यैन्द्रमुपतिष्ठते,

गंगायमुनामुपतिष्ठते, रथिकानुपतिष्ठते, पन्थाः स्रुघ्नमुपतिष्ठते.

अकर्मकाच्च, उपात्स्थः. भोजनकाले उपतिष्ठते

उद्विभ्यां तपः, अकर्मकात्. उत्तपते वितपते वा पाणिम्. सुवर्णमुत्तपति.

आङो यमहनः. आयच्छते, आहते.

समो गम्यृच्छिभ्याम्, अकर्मकाभ्याम्. संगच्छते.

स्पर्धायामाङः, ह्वेञः. कृष्णश्चाणूरमाह्वयते, पुत्रमाह्वयति.

सम्माननोत्सञ्जनाचार्यकरण ज्ञानभृति विगणन-व्ययेषु नियः. शास्त्रे नयते. (शास्त्रप्रवचनेन शिष्यान् सम्मानयति.) दण्डमुन्नयते, (उत्क्षिपति.) माणवकमुपनयते, (विधिना आत्मसमीपं प्रापयति.) तत्त्वं नयते, (निश्चिनोति.) कर्मकारानुपनयते, (भृतिदानेन स्वसमीपं प्रापयति.) करं विनयते, (धर्मार्थं विनियुंक्ते.)

1030 प्रोपाभ्यां समर्थाभ्याम्, क्रमः.

प्रक्रमते, उपक्रमते. (आरभते.)

सम्प्रतिभ्यामनाध्याने, ज्ञः.

शतं सञ्जानीते प्रतिजानीते वा. (अपेक्षते, अङ्गीकरोति वा.)

भासनोपसम्भाषाज्ञानयत्नविमत्युपमन्त्रणेषु वदः.

विवदन्ते.

व्यक्तवाचां समुच्चारणे, वदः.

सम्प्रवदन्ते विद्वांसः.

विभाषा विप्रलापे, वदः. विप्रवदते वैद्यः.

समः प्रतिज्ञाने, ग्रः. संगिरते.

ज्ञाश्रुस्मृदृशां सनः जिज्ञासते धर्मम्.

शुश्रूषते, सुस्मूर्षते, दिदृक्षते.

प्रोपाभ्यां युजेरयज्ञपात्रेषु प्रयुङ्क्ते, उपयुङ्क्ते,

नियुङ्क्ते, उद्युङ्क्ते.

भुजोऽनवने. ओदनं भुङ्क्ते, महीं भुनक्ति.

1039 गृधिवञ्च्योः प्रलम्भने. बालं गर्धयते, वञ्चयते.

(प्रतारयति, श्वानं गर्धयति, अहिं वञ्चयति, (वर्जयति.)

अपाद्वदः. अपवदते न्यायम्.

अनुपसर्गाज्ज्ञः. गां जानीते.

व्याङ्परिभ्यो रमः, परस्मैपदम्.

विरमति, आरमति, परिरमति.

अकथितं च, कर्मापादानादिभिः.

गां दोग्धि पयः, (गोर्दोग्धि पयः, गोः पयो दोग्धि.)

दुह् याच् पच् दण्ड् रुधि प्रच्छि चि ब्रू शासु जि मथ् मुषाम् । कर्मयुक्स्यादकथितं तथा स्यान्नी हृ कृष्वहाम् ॥ ग्राममजां नयति. (ग्रामाय.)

गति बुद्धि प्रत्यवसानार्थ शब्दकर्मा कर्मकाणां अणि कर्ता स णौ, कर्म. अजान् ग्रामान् गमयति. (अजाः ग्रामं गच्छन्ति.) बालं विद्यां बोधयति. शिशुमन्नं भोजयति. छात्रं पद्यं अध्यापयति. पेट्यां ग्रन्थानासयति.

अधिशीङ्स्थासां कर्म, आधारः.

अधिशेते अधितिष्ठति अध्यास्ते वा कुटीं भिक्षुः.

1046 उपान्वध्याङ्वसः, कर्माधारः. भिक्षुः कुटीं उपवसति, अनुवसति, अधिवसति, आवसति.

उभसर्वतसोः कार्या धिगुपर्यादिषु त्रिषु ।
द्वितीयाऽऽम्रेडितान्तेषु ततोऽन्यत्रापि दृश्यते ॥

स्तोकमास्ते पचति वा. धिक् शत्रुम्.
उपर्युपरि मस्तकं छत्रम्. अध्यधि सुखं दुःखम्.
अधोऽधो मस्तकं हृदयम्. उभयतः शरीरं
भुजौ. सर्वतः शरीरं लोमानि.

अभितः परितः समया निकषा हा प्रतियोगेऽपि.
कृष्णं न प्रतिभाति किञ्चित्. हा ! कृष्णम्.
निकषा लंकाम्. समया ग्रामम्. उदरं
परितो वस्त्रम्. मुखमभितः पुस्तकम्.

अकर्मकधातुभिर्योगे देशः कालो भावो
गन्तव्योऽध्वा च कर्म. कुरून् स्वपिति.
मासमास्ते, गोदोहमास्ते, क्रोशमास्ते.

अन्तरान्तरेण युक्ते, द्वितीया.
बाह्वोरन्तरा हृदयम्. अन्तरेण धर्मं न सुखम्.
परिधिमन्तरा नाभिः. आहारमन्तरेण न प्राणी.

कालाध्वनोरत्यन्तसंयोगे, द्वितीया.
मासमधीते. क्रोशं कुटिला नदी.

अपवर्गे तृतीया. (फलप्राप्तिः समाप्तिश्च.)
मासेनाधीतं गणितं क्रोशेन वा. (कालाध्वनोः.)

1051 सहयुक्तेऽप्रधाने, तृतीया.
पुत्रेण सह याति पिता.

येनांगविकारः, तेन तृतीया. अक्ष्णा काणः.

हेतौ, तृतीया. अध्ययनेन वसति.

रुच्यर्थानां प्रीयमाणः, सम्प्रदानम्.

देवाय रोचते भक्तिः.

धारेरुत्तमर्णः, सम्प्रदानम्.

शतं धारयति चैत्राय मैत्रः. (ऋणम्.)

क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः.

सः सम्प्रदानम्. चोराय क्रुध्यति.

शत्रवे द्रुह्यति, ईर्ष्यति, असूयति.

क्रुधद्रुहोरुपसृष्टयोः कर्म, यं प्रति कोपः.

क्रूरमभिक्रुध्यति, अभिद्रुह्यति.

क्रियार्थोपपदस्य च कर्मणि स्थानिनः.

तुमुनः चतुर्थी. फलेभ्यो याति.

( फलान्याहर्तुम्. )

तुमर्थाच्च भाववचनात्, चतुर्थी.

यागाय याति.

1060 नमःस्वस्तिस्वाहास्वधाऽलंवषड्योगाच्च,

योगे चतुर्थी. गुरवे नमः, प्रजाभ्यः स्वस्ति.

अग्नये स्वाहा, पितृभ्यः स्वधा, भीमोऽलं दुर्योधनाय. वषडिन्द्राय.

मन्यकर्मण्यनादरे विभाषाऽप्राणिषु, चतुर्थी.

तृणाय मन्यते धनं तृणं वा.

गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ चेष्टायामनध्वनि.

ग्रामं ग्रामाय वा याति, अध्वानं याति.

भीत्रार्थानां भयहेतुः, अपादानम्.

चोराद् बिभेति, त्रायते वा.

पराजेरसोढः, अपादानम्.

अध्ययनात् पराजयते.

वारणार्थानामीप्सितः, अपादानम्.

यवेभ्यो वारयति गाम्.

अन्तर्धौ येनादर्शनमिच्छति, सोऽपादानम्.

मातुर्निलीयते बालः.

जनि कर्तुः प्रकृतिः, अपादानम्.

ब्रह्मणः प्रजाः प्रजायन्ते.

1068 अन्यारादितरर्ते दिक्शब्दाञ्चूत्तरपदाजाहि युक्ते पञ्चमी. जलादन्यत्तेजः, आरात्पत्तनात्पल्ली. ग्रामात् पूर्वः, प्राग्वा.

पञ्चम्यपाङ्परिभिः, योगे. आ समुद्राद्भूमिः.

प्रतिनिधिप्रतिदाने च यस्मात्, पञ्चमी.

शर्कराभ्यः प्रति गुडः.

तिलेभ्यः प्रतियच्छति माषान्.

विभाषा गुणे ऽस्त्रियाम्, हेतौ पञ्चमी.

जाड्याद्बद्धो जाड्येन वा. धूमाद्वह्निमान्.

पृथग्विना नानाभिस्तृतीयान्यतरस्याम्, पञ्चमी द्वितीये च. लक्ष्मणः पृथक् रामात् रामेण रामं वा.

दूरान्तिकार्थेभ्यो द्वितीया च. पञ्चमी तृतीये.

ग्रामस्य दूरं दूरेण दूराद्वा. अंतिकं केन काद्वा.

षष्ठी हेतुप्रयोगे, अन्नस्य हेतोर्वसति.

सर्वनाम्नस्तृतीया च, केन हेतुना वसति.

षष्ठ्यतसर्थप्रत्ययेन, ग्रामस्य दक्षिणतः पुरः पुरस्ताद्वा, उपरि, उपरिष्टात्.

एनपा द्वितीया, दक्षिणेन ग्रामं परेण वा.

1078 दूरान्तिकार्थैः षष्ठ्यन्यतरस्याम्. पञ्चमी च.

दूरं निकटं वा ग्रामस्य ग्रामाद्व

कृत्वोऽर्थप्रयोगे कालेऽधिकरणे, षष्ठी.

पञ्चकृत्वोऽह्नो भोजनं बालानाम्.

द्विरह्नो भोजनं नीरोगाणाम्.

कर्तृकर्मणोः कृति, षष्ठी.

गजस्य गतिः, फलस्य भोक्ता.

उभयप्राप्तौ कर्मणि, षष्ठी. गवां दोहो गोपेन.

न लोकाव्ययनिष्ठाखलर्थतृनाम्, षष्ठी.

पाकं कुर्वन् कुर्वाणो वा, प्रकाशं दिदृक्षुः.

शत्रुं घातुकः, रामेण हतो वाली.

वालिनं हतवान् रामः, ईषत्करो व्याघ्रवधो लक्ष्यशस्य.

अकेनोर्भविष्यदाधमर्ण्ययोः, न षष्ठी.

सतः पालकोऽवतरति. व्रजं गामी, शतं दायी.

कृत्यानां कर्तरि वा, षष्ठी मया मम वा

सेव्यो गुरुः सेवनीयः सेवितव्यः.

तुल्यार्थैरतुलोपमाभ्यां तृतीयान्यतरस्याम्.

षष्ठी च. तुल्यः सदृशः.

समः काचः स्फटिकस्य, केन वा.

1086 चतुर्थी चाशिष्यायुष्यमद्रभद्रकुशलसुखार्थहितैः

षष्ठी. आयुष्यं चिरंजीवितं मद्रं भद्रं कुशलं सुखं शं प्रयोजनं हितं पथ्यं वा बालस्य बालाय भूयात्.

यस्य च भावेन भावलक्षणम्, ततः सप्तमी.

गोषु दुह्यमानासु गतः.

षष्ठी चानादरे. पश्यतो व्याघ्रस्य हन्ति.

यतश्च निर्धारणम्, ततः सप्तमी षष्ठी च.

गोषु कृष्णा बहुक्षीरा, गवां वा.

गच्छतां धावन् शीघ्रो, गच्छत्सु वा.

पञ्चमी विभक्ते.

माथुराः पाटलिपुत्रकेभ्य आढ्यतराः.

साधुनिपुणाभ्यामर्चायां सप्तम्यप्रतेः.

मातरि साधुः निपुणो वा.

प्रसितोत्सुकाभ्यां तृतीया च, सप्तमी.

प्रसित उत्सुको वा भोजने, भोजनेन. (आसक्तः.)

सप्तमीपञ्चम्यौ कारकमध्ये, कालाध्वनोः.

अद्य भुक्त्वायं द्व्यहे द्व्यहाद्वा भोक्ता.

इहस्थोऽयं क्रोशे क्रोशाद्वा लक्ष्यं विध्येत्.

1094 परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः.

कुक्कुटमयूर्याविमे, मयूरीकुक्कुटाविमौ.

तरुमूलम्, राजपुरुषः, राजस्त्री.

रात्राह्नाहाः पुंसि, द्वन्द्वतत्पुरुषयोः.

अहोरात्रः, पूर्वरात्रः, पूर्वाह्णः, द्व्यहः.

सङ्ख्यापूर्वं रात्रं क्लीबम् द्विरात्रम्,

त्रिरात्रम्, नवरात्रम्, दशरात्रम्,

गणरात्रम्, बहुरात्रम्.

जात्याख्यायामेकस्मिन् बहुवचनमन्यतरस्याम्.

विद्वांसः पूज्याः, पूज्यो विद्वान्

गजा महान्तः. गजो महान्.

सङ्ख्यापूर्वो द्विगुः. (वक्ष्यमाणे)

तद्धितार्थोत्तरपदसमाहारे च

त्रिषु समस्यते. पञ्चकपालः,

षाण्मातुरः स्कन्दः, त्रैमातुरो रामः,

षण्णां मातृणामपत्यं पुमान्.

मातुरुत्सङ्ख्यासम्भद्रपूर्वायाः, अण् च.

द्वैमातुरो गजाननः. साम्मातुरः.

भाद्रमातुरः. (द्वयोर्मात्रोरपत्यम्.)

1101 द्विगुरेकवचनम्, त्रिलोकम्.

स नपुंसकम्, द्वन्द्वश्च. (समाहारे.)
पाणिपादम्.
द्विगोः, ङीप् स्त्रियाम्. पञ्चवटी, त्रिलोकी.
सह सुपा, समर्थं समस्यते सुप् च.
अनुभवति. (पूर्वं भूतः.)
भूतपूर्वे चरट्. भूतपूर्वः.
अव्ययंविभक्तिसमीपसमृद्धिव्यृध्यर्थाभावात्यया-
सम्प्रतिशब्दप्रादुर्भावपश्चाद्यथानुपूर्व्ययौगपद्य-
सादृश्यसम्पत्तिसाकल्यान्तवचनेषु. समस्यते
समर्थेन. अधिकाशि, उपगृहम्, सुभद्रम्,
दुर्यवनम्, निर्मक्षिकम्, अतिहिमम्,
(अत्ययो ध्वंसः.) अतिनिद्रम्, इतिहरि,
अनुकृष्णम्. अनुरूपम्, प्रत्यर्थम्,
यथाशक्ति, सहरि, अनुज्येष्ठम्.
अव्ययीभावे चाकाले, सहस्य सः.
सचक्रम्, सक्षत्रम्, सतृणम्, सभाष्यम्.
आङ् मर्यादाभिविध्योः, पञ्चम्या.
आसमुद्रम्, आबाल्यम्.
1109 अव्ययीभावश्च, नपुंसकम्.

छाया बाहुल्ये, नपुंसकम्. इक्षुच्छायम्.

समासान्ताः.

अच् प्रत्यन्ववपूर्वात्सामलोम्नः.

प्रतिसामम्, अनुलोमम्, प्रतिलोमम्.

अहः सर्वैकदेशसङ्ख्यातपुण्याच्च रात्रेः. अच्.

अहोरात्रः, सर्वरात्रः, पूर्वरात्रः, सङ्ख्यातरात्रः, पुण्यरात्रः, द्विरात्रम्, अतिरात्रः.

राजाहः सखिभ्यष्टच् वीरराजः, रामसखः.

आन्महतः समानाधिकरणजातीययोः.

महादेवः, महाराजः, महत्सेवा.

तत्पुरुषः समानाधिकरणः कर्मधारयः

पुंवत्कर्मधारयजातीयदेशीयेषु.

महानवमी, कृष्णचतुर्दशी.

स्त्रियाः पुंवद्भाषितपुंस्कादनूङ् समानाधिकरणे स्त्रियामपूरणीप्रियादिषु.

रूपवद्भार्यः, दीर्घजङ्घः.

गोस्त्रियोरुपसर्जनस्य, ह्रस्वः.

1120 एच इग् ह्रस्वादेशे, चित्रगुः.

सङ्ख्ययाऽव्ययासन्नादूराधिकसङ्ख्याः सङ्ख्येये. समस्यन्ते स बहुव्रीहिः.

बहुव्रीहौ सङ्ख्येयेडजबहुगणात्.

उपदशाः, आसन्नविंशाः, अदूरत्रिंशाः, अधिकचत्वारिंशाः, द्वित्राः. पञ्चषाः, द्विदशाः. (द्वौ वा त्रयो वा.)

तत्र तेनेदमिति सरूपे.

गृहीत्वा प्रहृत्य च प्रवृत्तमिति. (युद्धम्)

इच् कर्मव्यतीहारे. केशाकेशि, दण्डादण्डि, मुष्टीमुष्टि, बाहूबाहवि.

अन्येषामपि दृश्यते दीर्घः.

नित्यमसिच् प्रजामेधयोः. नञ्दुःसुभ्यः.

अप्रजाः, दुष्प्रजाः, सुप्रजाः, अमेधाः, दुर्मेधाः, सुमेधाः.

धर्मादनिच् केवलात्. कल्याणधर्मा.

गन्धस्येदुत्पूतिसुसुरभिभ्यः.

उद्गन्धिः, पूतिगन्धिः, सुगन्धिः.

पादस्य लोपोऽहस्त्यादिभ्यः, बहुव्रीहौ.

व्याघ्रपात्.

सङ्ख्यासुपूर्वस्य, पादस्य लोपो बहुव्रीहौ.

चतुष्पात्, द्विपात्, सुपात्.

पादः पत्. भस्य. चतुष्पदा, सुपदा.

वयसि दन्तस्य दतृ. सङ्ख्यासुपूर्वस्य.

द्विदन्, चतुर्दन्, सुदन्, सुदती.

श्र्युकः किति, एकाचो धातोर्नेट्.

श्रितः, श्रितवान्, श्रित्वा. भूतः, भूतवान्, भूत्वा, भूतिः, भूष्णु.

श्वीदितो निष्ठायाम् धातोर्नेट्.

मत्तः, चित्तम्, नृत्तम्, जातः, दीप्तः, त्रस्तः, मत्तवान्.

यस्य विभाषा, इट् तस्य नेट् निष्ठायाम्.

कृत्तम्, वृत्तम्, अक्तम्, मतम्, कृतवान्.

1138 आदितश्च, निष्ठाया नेट्. स्विन्नः, स्विन्नवान्.

वसतिक्षुधोरिट्, क्त्वानिष्ठयोः. उषित्वा,
उषितः, उषितवान्, क्षुधित्वा, तः, तवान्.
अञ्चेः पूजायाम्. इट्. अञ्चितः, त्वा, तवान्.
जॄव्रश्च्योश्च क्त्वि, इट्. जरित्वा, व्रश्चित्वा.
उदितो वा. शमित्वा, शान्त्वा, भ्रमित्वा, भ्रान्त्वा.
अनुनासिकस्य क्विझलोः क्ङिति, दीर्घः.
शान्त्वा, द्यूत्वा, देवित्वा.
न क्त्वा सेट्. किन्न, शयित्वा.
नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः.

| | | | |
|---|---|---|---|
| नन्दनः, | ग्राही, | पचः, | |
| जनार्दनः, | स्थायी, | करः, | |
| मधुसूदनः, | मन्त्री, | घटः, | |
| विभीषणः, | विशायी, | धरः, | |
| लवणः, | विषयी, | चोरः, | चलः, |
| | भावी, | देवः, | गणः, |
| | परिभवी, | श्वपचः. | |

इगुपधज्ञाप्रीकिरः कः, बुधः, कृशः, ज्ञः,
प्रियः, किरः.
1147 वाऽसरूपोऽस्त्रियाम्, बोधकः, बोद्धा.

कृत्यल्युटो बहुलम्. स्नानीयम्, (चूर्णम्.)
दानीयः (भिक्षुः.)

अर्हे कृत्यतृचश्च. गम्यम्, देयम्, कर्ता,
हर्ता, भर्ता, गाता, गमनीयम्,
गन्तव्यम्.

श्याद्व्यधास्रुसंस्र्वतीणवसावहृलिषश्लिषश्वसश्च.
णः. प्रतिश्यायः, दाय., व्याधः,
आस्रावः, संस्रावः, अत्ययः, अवसायः,
अवहारः, लेहः, श्लेषः, श्वासः.

शिल्पिनि ष्वुन्. नर्तकः, खनकः, रजकः.

ह्वावामश्च, कर्मण्यण्. स्वर्गह्वायः, तन्तुवायः.
धान्यमायः, तुन्नवायः.

आतोऽनुपसर्गे कः. कर्मणि. धनदः,
गरदः, गोदः.

गापोष्टक् कर्मणि. सामगः, सरापः.

चरेष्टः कुरुचरः. (अधिकरणे.)

1156 कृञो हेतुताच्छील्यानुलोम्येषु, टः.
यशस्करी विद्या. श्राद्धकरः, वचनकरः,
सेवकः.

न शब्दश्लोककलहगाथावैरचाटुसूत्रमन्त्रपदेषु.

नटः. शब्दकारः. श्लोककारः. कलहकारः. गाथाकारः. वैरकारः. चाटुकारः. सूत्रकारः. मन्त्रकारः. पदकारः.

प्रियवशे वदः खच्.

अरुर्द्विषदजन्तस्य मुम्, खिति.

प्रियंवदः, वशंवदः.

आढ्य सुभग स्थूल पलित नग्नान्धप्रियेषु च्व्यर्थेष्वच्वौ कृञः करणे ख्युन्.

कर्मसूपपदेषु. अनाढ्य आढ्यो भवत्यनेन आढ्यंकरणम्.

कर्तरि भुवः खिष्णुच्खुकञौ.

आढ्यादिषु च्व्यर्थेष्वच्व्यन्तेषु.

अनाढ्य आढ्यो भवतीति आढ्यम्भावुकः. प्रियम्भावुकः.

आत्ममाने खश् च. णिनिः.

पण्डितम्मन्यः, पण्डितमानी.

1163 क्विप् च, कर्मणि. उखास्रत्.

दृशेः क्वनिप्. कर्मणि भूते. पारदृश्वा.

सहे च. कृञः क्वनिप्. सहकृत्वा.

सप्तम्यां जनेर्डः, सरसि जः.

अन्येष्वपि दृश्यते, डः. अजः, द्विजः.

दधाते र्हिः, ति किति. हितम्.

दो दद्घोः, ति किति. दत्तः.

अदो जग्धि र्ल्यप् ति किति.

जग्ध्वा, प्रजग्ध्य, जग्धः.

भाषायां सद वस श्रुवः, क्वसुः लिटः.

निषेदिवान्, अध्यूषिवान, शुश्रुवान्.

आक्वेस्तच्छीलतद्धर्मतत्साधुकारिषु.

तृन्. कर्ता कटान्

अलंकृञ् निराकृञ् प्रजनोत्पतोन्मद रुच्यपत्रप-
वृतु वृधु सहचर इष्णुच्

अलंकरिष्णुः, वर्धिष्णुः, चरिष्णु.

1175 भुवश्च. भविष्णुः, भ्राजिष्णुः.

ग्लाजिस्थश्च ग्स्नुः ग्लास्नुः, जिष्णुः, स्थास्नुः.

त्रसिगृधिधृषिक्षिपेः क्नुः त्रस्नुः, गृध्नुः.

लष पत पद स्था भू वृष हनकमगमशॄभ्य उकञ्.

लाशुकः, पातुकः, पादुकः, स्थायुकः.
भावुकः, वर्षुकः, घातुकः, कामुकः,
गामुकः, शारुकः.

जल्पभिक्षकुट्टलुण्टवृङः षाकन्.

जल्पाकः, भिक्षाकः, कुट्टाकः, लुण्टाकः,
वराकः, वराकी.

नमि कम्पि स्म्यजस कम हिंस दीपो रः

नम्रः, कम्प्रः, स्मेरः, अजस्रम्, कम्रः, हिंस्रः, दीप्रः.

स्थेश भास पिस कसो वरच् स्थावरः, ईश्वरः, भास्वरः, पेस्वरः, कस्वरः.

भ्राज भास धुर्विद्युतोर्जिपृजु ग्रावस्तुवः क्विप्.

विभ्राट्, भाः, भासौ, धूः, धुरौ, विद्युत्, ऊर्क्, पूः, पुरौ, ग्रावस्तुत्.

तच्छील तद्धर्म तत्साधुकारीति निवृत्तम्.

धः कर्मणि ष्ट्रन् धात्री.

दाम्नी शस यु युज स्तु तुद सि सिच मिह पत-दश नहः करणे ष्ट्रन् दात्रम्, नेत्रम्.

ति तु त्र त थ सि सु सर क सेषु च नेट्.

इति. शस्त्रम्, योत्रम्, योक्त्रम्, स्तोत्रम्, तोत्रम्, सेत्रम्, सेक्त्रम्, मेढ्रम्, पत्त्रम्, दंष्ट्रा, नद्ध्री.

1192 अर्ति लू धू सू खन सह चर इत्रः करणे.

अरित्रम्, लवित्रम्, धवित्रम्, सवित्रम्, खनित्रम्, सहित्रम्, चरित्रम्